शेषश्चात्र– मांसे तूद्घ समारटम् ॥
लेपनं च ॥

पेश्यस्तु तल्लताः ।

पिंशन्ति पेशयः "किलिपिलि-" ॥ (उणा-६०८) ॥ इति इः, ङ्यां पेश्य', तस्य मासस्य लतास्तल्लता. ॥ १ ॥

बुक्का हृद् हृदयं वृक्का सुरसं च तदग्रिमम् ॥ २८७ ॥

बुक्कयते स्वादुत्वाद् मृग्यते बुक्का "उक्षितक्ष्य-"॥ (उणा-९००) ॥ इत्यनन्त. पुंस्ययम् "क्तेटो-" ॥५।३।१०६॥ इत्यप्रत्यये तु बुक्का स्त्रियामावन्त, पुंलिङ्ग इति गौड । भागुरिस्तु– "अग्रमासं भवेद् बुक्कम्" इति क्लीबमाह ॥ १ ॥ ह्रियते हृद् हृदयम् ॥२॥३॥ वृज्यते वृक्का "निष्कतुरुष्क-" ॥ (उणा-२६) ॥ इति के निपात्यते, स्त्रीलिङ्गोऽयम्, यद्गौड – "स्त्रियां वृक्का बुक्क सुरसमद्वयो" इति। वैजयन्तीकारस्तु– "वृक्कौ पार्श्वगतौ गुलौ" इत्याह । सुष्ठु रस्यते सुरसम् तद् मासमग्रिमं मुख्यम्, "बुक्काऽग्रमासं, हृदयं च जीवाधारपद्मम, इत्यमर पृथक् पृथगाह ॥४॥२८७॥

शुष्कं वल्लूरमुत्तप्तम् ।

शुष्कं मासं वल्ल्यते वल्लूरं त्रिलिङ्ग "मीमासि-" ॥ (उणा- ४२७) ॥ इत्यूर', वलं लुनातीति वा ॥ १ ॥ उत्तप्यते शोष्यते उत्तप्तम् ॥ २ ॥

पूयदूष्ये पुनः समे ।

पूयते दुर्गन्धीभवति, पूय पुक्लीबलिङ्ग ॥ १ ॥ दूष्यते दूष्यम् ॥ २ ॥

मेदोऽस्थिकृद् वपा मांसात् तेजो-जे गौतमं वसा ॥ २८८ ॥

मेद्यते स्निह्यते मेद, क्लीबलिङ्ग "अस्" ॥ (उणा-९५२) ॥ इत्यस् अस्थीनि करोत्यस्थिकृत् ॥ २ ॥ उप्यते वपा, भिदाद्यडि साधु ॥ ३ ॥ मासशब्दात् तेजोजे मासतेज, मांसजम् ॥४॥५॥ गोतमस्येदं गौतमम् ॥ ६ ॥ उष्यतेऽङ्गेऽनया भिदाद्यडि वसा "शुद्धस्य मासस्य य. स्नेह सा वसा" इति वैद्याः ॥७॥२८८॥

गोदं तु मस्तकस्नेहो मास्तिष्को मस्तुलुङ्गकः ।

गवते गोदं कुमुदादौ निपात्यते, क्लीबलिङ्गोऽयम्, वाचस्पतिस्तु "गोदोऽस्त्री मस्तुलुङ्गकम्" इति पुंस्यप्याह ॥ १ ॥ मस्तकस्य स्नेहो मस्तकस्नेह ॥ २ ॥ मस्तकमिष्यति गच्छति मास्तिष्क, पुंक्लीबलिङ्ग ॥ ३ ॥ मस्तकमालिङ्गति मस्तुलुङ्ग. पृषोदरादित्वात्, के मस्तुलुङ्गक' ॥ ४ ॥

अस्थि कुल्यं भारद्वाजं मेदस्तेजश्च मज्जकृत् ॥ २८९ ॥
मांसपित्तं श्वदयितं कर्करो देहधारकम् ।

मेदोजं कीकसं सारः

अस्यते अस्थि, क्लीबलिङ्ग. "वीसञ्जि–" ॥ (उणा–६६९) इति थिक् ॥१ कुले शरीरे साधु कुल्यं, पुंक्लीबलिङ्ग ॥ २ ॥ भरद्वाजस्येदं भारद्वाजम् ॥ ३ ॥ मेदस्तेजो मेदस्तेज ॥ ४ ॥ मज्जानं करोति मज्जकृत् ॥५॥२८९॥ मांसस्य पित्तं मांसपित्तम् ॥६॥ शुनो दयितं श्वदयितम् ॥७॥ करोति मज्जानं कर्कर· "किशृभ्य -" (उणा–४३५) ॥ इति बहुवचनात् कर ॥ ८ ॥ देहं धारयति देहधारकम् ॥ ९ मेदसो जातं मेदोजम् ॥ १० ॥ कीति कसति कीकसं, ककन्तेऽत्र श्वान इति "फनस–" ॥ ( उणा-५७३ ) ॥ इत्यने निपात्यते ॥ ११ ॥ सरति कालान्तरमि सार , हड्डं देश्यां, संस्कृतेऽपि, यद्वैजयन्ती– "अथास्थि कीकसं हड्डम्" इति ॥१२

करोटिः शिरसोऽस्थनि ॥ २९० ॥

करोट्यते करोटि·, स्त्रीलिङ्ग· " खेरभ्य इ· " ॥ ( उणा–६०६ ) इ करोटी ॥ १ ॥ २९० ॥

कपालकर्परौ तुल्यौ

कपिः सौत्र·, कप्यते कपालं, पुंक्लीबलिङ्ग· "ऋकृमृ–" ॥ (उणा–४७५) इत्यालः, के पालयति वा तस्य मूर्ध्नोऽर्धास्थि, घटादिखण्डेऽप्युपचारात ; शकलमपि॥१। कल्पते कापालिकानां कर्परः "जठर–" ॥ (उणा–४०३) ॥ इत्यरे निपात्यते ॥२।

पृष्ठस्याऽस्थ्नि कशेरुका ।

कस्यते कशेरु, स्त्रीक्लीबलिङ्ग· "शिग्रुगे–" ॥ (उणा–८११) ॥ इति साधु स्त्रियामपि वैजयन्ती यदाह– "पृष्ठस्यास्थि कशेरुना" इति, के कशेरुका स्त्रीक्लीबलिङ्ग 'कशारुका' इति मुनि· ॥ १ ॥

शाखाऽस्थनि स्यान्नलकं

नलति नलकम् ॥१॥

पार्श्वास्थि वङ्क्रिपर्शुके ॥२९१॥

वङ्कते वक्राभवति वङ्क्रि , स्त्रीलिङ्ग "तङ्किवङ्क–" ॥ (उणा–६९२) ॥ इति रि· ॥ १ ॥ पृणेति मांसादिना पर्शु· "प्रः शु" ॥ (उणा–८२५) ॥ इति शु·, के पर्शुका ॥२॥२९१॥

शरीरास्थि करङ्क· स्यात् कंकालमस्थिपञ्जरः ।

कीर्यते आदिभिरिति करङ्कः "किरोऽङ्को रो लश्च वा" ॥ (उणा–६२) ॥१॥ कस्यते कंकालं, पुंक्लीबलिङ्गः "चाचालककाल–" ॥ (उणा–७८८) ॥१॥ इत्यले

मज्जा तु कौशिकः शुक्रकरोऽस्थः स्नेहसम्भवौ ॥२९२॥

मज्जत्यस्थनि मज्जा "उक्षितक्षि–" ॥ ( उणा–९०० ) ॥ इत्यन्, नन्तः पुस्ययम् । वाचस्पतिस्तु– "अथ मज्जा द्वयो" इति स्त्रियामप्याह । वयं तु ब्रूम – मज्ज्यतेऽनयाऽस्थिनीति भिदाद्यङि मज्जा स्त्रीलिङ्ग ॥ १ ॥ कुशिकस्यायं कौशिक ॥ २ ॥ शुक्रं करोति शुक्रकर ॥ ३ ॥ अस्थिशब्दात् स्नेहसम्भवौ– अस्थिस्नेहः, अस्थिसम्भव , अस्थितेजोऽपि ॥ ४ ॥ ५ ॥ २९२ ॥

शुक्रं रेतो बलं बीजं वीर्यं मज्जसमुद्भवम् ।
आनन्दप्रभवं पुंस्त्वमिन्द्रियं किट्टवर्जितम् ॥२९३॥
पौरुषं प्रधानधातुः

शोचन्त्यस्मिन् पतिते शुक्र "ऋज्यजि–" ॥ (उणा–३८८) ॥ इति किद् र ॥ १ ॥ रीयते स्रवति रेत , क्लीबलिङ्ग- "स्रुरीभ्या तस्" ॥ ( उणा–९७८ ) ॥ २ ॥ बलति बलम् ॥ ३ ॥ वेति प्रजायतेऽनेन बीजं "वियो जक्" ॥ (उणा–१२७) ॥ ४ ॥ वीर्यते वीर्यं, वीरे क्लीवे साधु वा ॥ ५ ॥ मज्जत समुद्भवति मज्जसमुद्भवम् ॥ ६ ॥ आनन्दात् प्रभवति आनन्दप्रभवम् ॥ ७ ॥ पुंसो भाव पुंस्त्वम् ॥ ८ ॥ इन्द्रस्यात्मनो लिङ्गमिन्द्रियम् "इन्द्रियम्" ॥७।१।१७४॥ इति साधु ॥ ९ ॥ किट्टेन मलेन वर्जितं किट्टवर्जितम् ॥ १० ॥ २९३ ॥ पुरुषस्य भाव कर्म वा पौरुषं "पुरुषहृदया–" ॥७।१।७०॥ इत्यण् ॥११॥ प्रधानं चासो धातुश्च प्रधानधातु ॥१२॥

लोम रोम तनूरुहम् ।

शिरसोऽन्यत्र रोहति रोम, क्लीबलिङ्गः "सात्मन्नात्मन्–" ॥ (उणा–९१६) ॥ इति मनि निपात्यते, लूत्वे लोम, लूयत इति वा ॥ १ ॥ २ ॥ तन्वा रोहति तनूरुहं, पुंक्लीबलिङ्गौ, मूलविभुजादित्वात् क ॥ ३ ॥

शेषश्चात्र– रोमणि तु त्वग्मलं वालपुत्रक ।
कूपजो मांसनिर्यास परित्राणम् ॥

त्वक् छविश्छादनी कृत्तिश्चर्माऽजिनमसृग्धरा ॥ २९४ ॥

तनोति त्वक्, "तनेर्ड्वच्" ॥ ( उणा–८७२) ॥ इति ड्वच् , सिरामांसादि त्वचतीति वा ॥१॥ छ्यन्त्येना छवि स्त्रीलिङ्गौ "छविच्छिवि-" ॥ (उणा–७०६) ॥ इति वौ निपात्यते ॥ २ ॥ छाद्यते रुधिराद्यनया छादनी ॥ ३ ॥ कृत्यतेऽसौ कृत्ति ॥ ४ ॥ चरत्यनेन चर्म "मन्" ॥ (उणा-९११) ॥ इति मन् ॥ ५ ॥ अजन्ति तदिति अजिन "विपिनाऽजिना-" ॥ (उणा-२८४) ॥ इतीने निपात्यते ॥ ६ ॥ असृग् धरत्यसृग्धरा' अमरस्तु–"अजिन चर्म कृत्ति स्त्री" इति कृत्त्यादीन् त्रीन् मृगयोनित्वात् पृथगाह, अत एव 'मृगा अजिनयोनय '

इत्युक्ताः । वाचस्पतिरपि-

"तत्राजिनं मृगयोनिर्मृगाश्च प्रियकादयः ।
मृगप्रकरणे तेऽथ प्रोक्ता अजिनयोनय " ॥ १ ॥

इत्याह ॥ २९४ ॥

वस्नसा तु स्नसा स्नायुः

वस्ते छादयति कायं वस्नसा "फनस-" ॥ (उणा-५७३) ॥ इत्यसे निपात्यते ॥१॥ स्नस्यति निरस्यति स्नसा, स्त्रीलिङ्गः ॥२॥ स्नायति वेष्टयत्यस्थीनीति स्नायुः "कृवापा-" ॥ (उणा-१) ॥ इत्युण्, स्त्रीलिङ्गोऽयं, क्लीबेऽपि वाचस्पतिर्यदाह- "अथ स्नायुर्नसा तन्त्री " इति ।

शेषश्चात्र- अथ स्नसा । तन्त्रीरसारुन्नावान सन्धिबन्धनमित्यपि ॥

नाड्यो धमनयः सिराः ।

नडस्यवती नाड्यः गौरादित्वात्, नडेः गौणस्य वा घञ्; नडिरपि ॥१॥ धम्यन्ते धमनयः स्त्रीलिङ्गः ॥२॥ सिन्वन्त्यस्थीनि सिराः "ऋज्यजि-" ॥ (उणा-३८८) ॥ इति किद् रः ॥३॥

कण्डरा तु महास्नायुः

कण्डते माद्यति कण्डरा "जठर-" ॥ (उणा-४०३) ॥ इत्यरे निपात्यते ॥१॥ महती स्नायुर्महास्नायु "स्नायुसंघात " इति वैद्याः ॥२॥

मलं किट्टं

मलते धारयति काय मलं, मृज्यते वा "मृजिगम्या-" ॥ (उणा-४७२) ॥ इति डिद्लः ॥१॥ केटति किट्टं, पुंक्लीबलिङ्गावेतौ ॥२॥

तदक्षिजम् ॥ २९५ ॥

दूषीका दूषिका

तद् मलमक्षिसंभवम् ॥२९५॥ दूषयति चक्षुर्दूषीका "मृणीकादि-" ॥ (उणा-४६) ॥ इतीकः ॥१॥ "क्वापा-" ॥ (उणा ३८) ॥ इतीके दूषिका ॥२॥

जैहं कुलुकं

जिह्वाया जातं मलं जैहं, कोलति संस्त्यायति कुलुकं "कञ्चुकांशुक-" (उणा-५७) ॥ इत्युके निपात्यते ॥१॥

पिप्पिका पुनः ।

दन्त्यं

प्यायते पिप्पिका "कृशिक-" ॥ (उणा-४५) ॥ इतीके निपात्यते ॥१॥

फार्णं तु पिञ्जूषः

कर्णयोर्जातं मलं कार्णं पिञ्ज्यते पिञ्जूषः "कोरदूपाटरूष-" ॥ (उणा-५६१) ॥ इत्यूषे निपात्यते ॥१॥

शिङ्घाणो घ्राणसम्भवम् ॥ २९६ ॥

शिङ्घ्यते शिङ्घाणः "वहुलम्" ॥५।१।२॥ इत्याणः "घाल्लुशिङ्घि-" ॥ (उणा-७०) ॥ इत्याणके, शिङ्घाणकोऽपि ॥१॥२९६॥

सृणीका स्यन्दिनी लालाऽऽस्यासवः कफकूचिका ।

सरति मुखात् सृणीका "सृणीकास्तीक-" ॥ (उणा-५०) ॥ इतीके निपात्यते 'सृणिका' इत्यमरः । स्यन्दतेऽवश्यं स्यन्दिनी ॥२॥ लाति लाला, "भिल्लाच्छभल्ल-"॥ (उणा-४६४) ॥ इति ले निपात्यते, लालयते वा ॥ ३ ॥ आस्यस्यासव आस्यासवः ॥ ४ ॥ कफस्य कूचिकेव कफकूचिका ॥ ५ ॥

मूत्रं वस्तिमलं मेहः प्रस्रावो नृजलं स्रवः ॥ २९७ ॥

मूत्र्यते मूत्रं, मूयते वा "सुमूख-" (उणा-४४९) ॥ इति कित् त्रट् ॥१॥ वस्तेर्मलं वस्तिमलम् ॥२॥ मेहत्यनेन मेहः ॥३॥ प्रस्रूयते प्रस्रावः "प्रात् स्रुद्रुस्तोः" ॥५।३।६७॥ इति घञ् ॥४॥ नुर्नरस्य जलं नृजलम् ॥५॥ स्रवणं स्रवः ॥६॥२९७॥

पुष्पिका तु लिङ्गमलं

पुष्प्यति पुष्पिका ॥१॥

विड् विष्ठाऽवस्करः शकृत् ।

गूथं पुरीषं शमलोच्चारौ वर्चस्कवर्चसी ॥२९८॥

'विशति पक्वाशये विट्, स्त्रीलिङ्गः, वैजयन्तीकारस्तु- "उच्चारो विड् न ना" इति क्लीबेऽप्याह । अमरस्तु- "विष्ठाविषौ स्त्रियाम्" इति मूर्धन्यं षमाह ॥१॥ विशति विष्ठा "पीविशि-" ॥ (उणा-१६३) ॥ इति कित् ठः ॥२॥ अव- अध कीर्यतेऽवस्करः, वर्चस्कादित्वात् साधु ॥ ३ ॥ शक्नोत्यनेन शकृत्, क्लीबलिङ्गः "शक ऋत्" ॥ (उणा-८९१) ॥ ॥ ४ ॥ गूयत उत्सृज्यते गूथं पुंक्लीबलिङ्गः "पथयूथ-" ॥ (उणा-२३१) ॥ इति थे निपात्यते ॥ ५ ॥ पृणात्यन्त्रं पुरीषं "ऋजिशॄपृभ्यः कित्" ॥ (उणा-५५४) इतीषः ॥ ६ ॥ शाम्यति शमलं "शमेर्व च वा" ॥ (उणा-४७०) ॥ इत्यलः ॥ ७ ॥ उच्चार्यते प्रेर्यते उच्चारः ॥ ८ ॥ वर्च एव वर्चस्कं, पुंक्लीबलिङ्गः ॥ ९ ॥ वर्चतेऽनेन वर्चः "अस्" ॥ (उणा-९५२) ॥ इत्यस्' अशुच्यपि ॥१०॥२९८॥

वेषो नेपथ्यमाकल्पः

वेषेष्वर्हं वेषो वस्त्राऽलङ्कारमाल्यप्रसाधनैरङ्गशोभा, पुंक्लीबलिङ्गः । "विशति चेन" इत्यन्ये तालव्य शमाहुः ॥ १ ॥ नेत्रयोः पथ्यं नेपथ्यं, पृषोदरादित्वात् ॥ २ ॥ आकल्पते आकल्पः ॥३॥

परिकर्माऽङ्गसंस्क्रिया ।

मलपरिमार्जनार्थं क्रिया परिकर्म स्नानोद्वर्तनादि ॥१॥

उद्वर्तनमुत्सादनं

उद्वर्त्यतेऽनेनोद्वर्तनम् ॥१॥ उत्साद्यतेऽनेनोत्सादनम् 'उच्छादनम्'इत्यन्ये ॥२॥

अङ्गरागो विलेपनम् ॥ २९९ ॥

अङ्गं रज्यतेऽनेनाङ्गरागः ॥१॥ विलिप्यतेऽनेन विलेपनम् ॥२॥२९९॥

चर्चिक्यं समालभनं चर्चा स्यात्

चर्चिकायां चर्चने साधु चर्चिक्यं, चन्दनादिना पुण्ड्रादिक्षेपणम् ॥१॥ लभग् प्रेरणे इत्यत्र लभणस्थाने लभण् इति सभ्याः पठन्ति, तस्य समालभ्यतेऽनेन समालभनम् ॥२॥ चर्च्यतेऽनया चर्चा 'भीषिभूषि-" ॥५।३।१०९॥ इत्यङ् ॥ ३ ॥

मण्डनं पुनः ।

प्रसाधनं प्रतिकर्म

मण्ड्यतेऽनेन मण्डनं तिलकपत्रभङ्गादि ॥१॥ प्रसाध्यतेऽनेन प्रसाधनम् ॥२॥ प्रत्यङ्गं कर्म प्रतिकर्म ॥३॥

मार्ष्टिः स्याद् मार्जना मृजा ॥ ३०० ॥

मार्ज्यते मार्ष्टिः शुद्धिमात्रं स्त्र्यादित्वात् क्तिः ॥ १ ॥ मार्जनं मार्जना ॥ २ ॥ भिदादित्वाद् मृजा ॥ ३ ॥ ३०० ॥

वासयोगस्तु चूर्णः स्यात्

वास्यते सुगन्धीक्रियते येन युज्यमानेन मिश्रेण स वासयोगः ॥१॥ चूर्ण्यते चूर्णः पटवासादिक्षोदः, पुंक्लीबलिङ्गः ॥२॥

पिष्टातः पटवासकः ।

पिष्टेन कुङ्कुमचूर्णादिनाऽतति पिष्टातः ॥१॥ पटो वास्यतेऽनेन पटवासः, के पटवासकः ॥२॥

गन्धमाल्यादिना यस्तु संस्कारः सोऽधिवासनम् ॥३०१॥

संस्कारः गन्धमाल्यादिना गुणाधानम्, आदिशब्दाद् धूपादिभिरधिवास्यतेऽधिवासनम् ॥ १ ॥ ३०१ ॥

निर्वेश उपभोगः

निष्पूर्वो विशिरुपभोगार्थे वर्तते, निर्वेशनं निर्वेश ॥१॥ उपभुक्तिरुपभोग ॥२॥

अथ स्नानं सवनमाप्लवः ।

स्नायते स्नानम् ॥१॥ सूयते सवनम् ॥२॥ आप्लवनमाप्लवः, आप्लावोऽपि ॥३॥

कर्पूरागुरुकक्कोलकस्तूरीचन्दनद्रवैः ॥ ३०२ ॥

स्याद् यक्षकर्दमो मिश्रैः

यक्षप्रियः कर्दमो यक्षकर्दम , धन्वन्तरिस्तु–

"कुङ्कुमागुरुकस्तूरी कर्पूर चन्दन तथा ।
महासुगन्धमित्युक्तं नामतो यक्षकर्दम " ॥१॥

इत्याह ।

वर्तिर्गात्राऽनुलेपनी ।

वर्तते वर्ति , नटादौ प्रसिद्धा "विदिवृतेर्वा" ॥ (उणा-६१०) ॥ इति इ , स्त्रीलिङ्गोऽयम् ॥१॥ गात्रमनुलिप्यतेऽनया गात्रानुलेपनी ॥ २ ॥

चन्दनागरुकस्तूरीकुङ्कुमैस्तु चतुःसम् ॥ ३०३ ॥

चन्दनादीनि चत्वारि समान्यत्र चतु समम् ॥ १ ॥ ३०३ ॥

अगुर्वगरुराजार्हं लोहं कृमिजवंशिके ।
अनार्यजं जोङ्गकं च

न गुरु अगुरु, अगत्यनेनाऽगरु " कटिकुटि" ॥ ( उणा-८१२ ) ॥ इत्युपलक्षणत्वादरु , अगं रुणद्धि इति वा, पुंक्लीवलिङ्गावेतौ ॥ १॥ २ ॥ राज्ञोऽर्हं राजार्हम् ॥ ३ ॥ रोहति लोहं पुंनपुंसक ॥ ४ ॥ कृमिभिर्जन्यते कृमिज "क्वचित्" ॥ ५ । १ । १७१ ॥ इति ड.; कृमिजग्धमित्यपि ॥ ५ ॥ वंशोऽस्या अस्ति वंशिका, स्त्रीक्लीवलिङ्ग "वंशाभं वशकम्" इत्यमरटीका ॥६॥ अनार्यदेशे जातमनार्यजम् ॥७॥ जोङ्गकगिरिभवत्वाद् जोङ्गकम् ॥ ८ ॥

शेषश्चात्र– अगरौ प्रवरं शृङ्गं शीर्षकं मृदुलं लघु ॥
वरद्रुम परमद प्रकरं गन्धदारु च ॥

मङ्गल्या मल्लिगन्धि यत् ॥ ३०४ ॥

मल्लिकाकुसुमगन्धि यदगुरु सो मङ्गले साधुर्मङ्गल्या ॥१॥ ३०४ ॥

कालागरुः काकतुण्डः

काकस्य तुण्ड इव कृष्णवर्णत्वात् काकतुण्ड. ॥१॥२॥

निर्वेश उपभोगः

निष्पूर्वो विशिरुपभोगार्थे वर्तते, निर्वेशनं निर्वेशः ॥१॥ उपभुक्तिरुपभोग ॥२॥

अथ स्नानं सवनमाप्लवः ।

स्नायते स्नानम् ॥१॥ सूयते सवनम् ॥२॥ आप्लवनमाप्लवः, आप्लावोऽपि ॥३॥

कर्पूरागुरुकक्कोलकस्तूरीचन्दनद्रवैः ॥ ३०२ ॥

स्याद् यक्षकर्दमो मिश्रैः

यक्षप्रियः कर्दमो यक्षकर्दम, धन्वन्तरिस्तु–

"कुङ्कुमागुरुकस्तूरी कर्पूर चन्दन तथा ।
महासुगन्धमित्युक्तं नामतो यक्षकर्दम." ॥१॥

इत्याह ।

वर्तिर्गात्राऽनुलेपनी ।

वर्तते वर्ति, नटादौ प्रसिद्धा "विदिवृतेर्वा" ॥ (उणा-६१०) ॥ इति इ, स्त्रीलिङ्गोऽयम् ॥१॥ गात्रमनुलिप्यतेऽनया गात्रानुलेपनी ॥ २ ॥

चन्दनागरुकस्तूरीकुङ्कुमैस्तु चतुःसम् ॥ ३०३ ॥

चन्दनादीनि चत्वारि समान्यत्र चतु समम् ॥ १ ॥ ३०३ ॥

अगुर्वगरुराजार्हं लोहं कृमिजवंशिके ।

अनार्यजं जोङ्गकं च

न गुरु अगुरु, अगत्यनेनाऽगरु " कटिकुटि" ॥ ( उणा-८१२ ) ॥ इत्युपलक्षणत्वादरु, अगं रुणद्धि इति वा, पुंक्लीबलिङ्गावेतौ ॥ १॥ २ ॥ राज्ञोऽर्हं राजार्हम् ॥ ३ ॥ रोहति लोहं पुंनपुंसक ॥ ४ ॥ कृमिभिर्जन्यते कृमिजं "क्वचित्" ॥ ५ । १ । १७१ ॥ इति डः, कृमिजग्धमित्यपि ॥ ५ ॥ वंशोऽस्या अस्ति वशिका, स्त्रीक्लीबलिङ्ग. "वंशाभं वशकम्" इत्यमरटीका ॥६॥ अनार्यदेशे जातमनार्यजम् ॥७॥ जोङ्गकगिरिभवत्वाद् जोङ्गकम् ॥ ८ ॥

शेषश्चात्र– अगरौ प्रवरं शृङ्गं शीर्षकं मृदुलं लघु ॥
वरद्रुम परमद प्रकरं गन्धदारु च ॥

मङ्गल्या मल्लिगन्धि यत् ॥ ३०४ ॥

मल्लिकाकुसुमगन्धि यदगुरु सो मङ्गले साधुर्मङ्गल्या ॥१॥ ३०४ ॥

कालागरुः काकतुण्डः

काकस तुण्ड इव कृष्णवर्णत्वात् काकतुण्डः ॥१॥२॥

श्रीखण्डं रोहणद्रुमः ।
गन्धसारो मलयजश्चन्दने

श्रिया खण्ड्यते श्रीखण्डम् ॥१॥ रोहणाचलस्य द्रुमो रोहणद्रुमः ॥२॥ गन्धेन सारो गन्धसारः ॥३॥ मलयाद्रेर्जातो मलयजः ॥४॥ चन्द्यते ह्लाद्यतेऽनेन चन्दनः "स्यमिरगि-" ॥ ( उणा-२६३ ) इत्यनः, तत्र पुंक्लीबलिङ्गावेतौ ॥ ५ ॥

शेषश्चात्र- चन्दने पुनरेकाङ्गं भद्रश्रीफलकोऽपि ॥

हरिचन्दने ॥ ३०५ ॥
तैलपर्णिकगोशीर्षौ

हरेरिन्द्रस्य चन्दनं हरिचन्दनं, पुंक्लीबलिङ्गमत्र, हरिः कपिलं वा तमाति शीतं पीतं चाहुः, तत्र ॥१॥ ३०५ ॥ तैलपर्णो गिरिराकरोऽस्यास्य तैलपर्णिकः ॥ २ ॥ गोशीर्षगिरिभवत्वाद् गोशीर्षः, पुंस्येतौ, गौडस्तु- "गोशीर्षं तैलपर्णिकम्" इति क्लीबमाह ॥ १ ॥

पत्राङ्गं रक्तचन्दनम् ।
कुचन्दनं ताम्रसारं रञ्जनं तिलपर्णिका ॥ ३०६ ॥

पत्रैरङ्गतीति पत्राङ्गं पतङ्गं त्वेतदपत्रेण ॥१॥ रक्तं च तच्चन्दनं च रक्तचन्दनम् ॥२॥ कु चन्दनं कुचन्दनम् ॥३॥ ताम्रेषु रक्तेषु सारं ताम्रसारम् ॥४॥ रज्यतेऽनेन रञ्जनम् ॥ ५ ॥ तिलस्येव पर्णान्यस्यास्तिलपर्णी सैव तिलपर्णिका, तिलपर्णी नदी आकरोऽस्या इत्येके ॥ ६ ॥ ३०६ ॥

जातिकोशं जातिफलं

जातीलतायाः कोश जातिकोशं जातिसन्नाम्यम् ॥ १ ॥ जात्याः फलं जातिफलम् ॥ २ ॥

शेषश्चात्र- जातीफले सौमनसं पुटकं मज्जसारकम् ।
कोशफलम् ॥

कर्पूरो हिमवालुका ।
घनसारः सिताभ्रश्च चन्द्रः

कल्पते कर्पूरः, पुंक्लीबलिङ्गः "मामगि-" (उणा-४२७) ॥ इत्यूरः ॥१॥ हिमानां वालुकेव हिमवालुका ॥२॥ घनश्चासौ सारश्चासौ घनसारः ॥३॥ सिताभ्रक इवाऽऽभाति सिताभ्रः ॥४॥ ह्लादकत्वात् चन्द्रः, पुंक्लीबलिङ्गः, चन्द्रपर्याया अपि ॥ ५ ॥

अथ मृगनाभिजा ॥ ३०७ ॥
मृगनाभिर्मृगमदः कस्तूरी गन्धधूल्यपि ।

मृगनाभेर्जाता मृगनाभिजा ॥१॥३०७॥ मृगनाभिजन्यत्वाद् मृगनाभिः, स्त्रीलिङ्ग ॥२॥ मृगस्य मदो मृगमद ॥३॥ कसति कस्तूरी "सिन्दूरकर्चूर-" ॥ (उणा० ४३०)॥ इत्यूरे निपात्यते, विकसति सौगन्ध्यमस्या वा, के स्तूयत इति वा, पृषोदरादित्वात् ॥४॥ गन्धप्रधाना धूली गन्धधूली ॥ ५ ॥

कश्मीरजन्म घुसृणं वर्णं लोहितचन्दनम् ॥ ३०८ ॥
वाह्लीकं कुङ्कुमं वह्निशिखं कालेयजागुडे ।
सङ्कोचपिशुनं रक्तं धीरं पीतनदीपने ॥ ३०९ ॥

कश्मीरेषु जन्माऽस्य कश्मीरजन्म ॥ १ ॥ घृष्यतेऽनेनाङ्गं, घुंषते कान्तिं करोति वा घुसृणं "भ्रूणतृण-" ॥ (उणा–१८६) ॥ इति णे निपात्यते ॥ २ ॥ वर्ण्यते वर्णम्, वर्ण्यमपि ॥ ३ ॥ लोहित चन्दनमिव लोहितचन्दनम् ॥४॥३०८॥ वाह्लीकेषु जातं वाह्लीकं "कोपान्त्या-" ॥ ६।३।५६ ॥ इत्यण्, वाह्लिकमपि ॥ ५ ॥ कुक्यते कुङ्कुमं, क्लीवलिङ्गोऽयं, वाचस्पतिस्तु– "निदाघेऽपि कुङ्कुम· सुख स्यात्", इति पुस्याह । "कुन्दुमलिन्दुम-" ॥ ( उणा–३५२) ॥ इति निपात्यते ॥६॥ वह्नेरिव शिखा केशरोऽस्य वह्निशिखम् ॥ ७ ॥ कु ईषल्लीयते कालेयम् ॥८॥ जागर्ति मण्डनेषु जागुडं "विहड-" ॥ ( उणा–१७२ ) ॥ इति निपात्यते ॥ ९ ॥ संकोचस्य पिशुनं सूचक सकोचपिशुनं, संकोचं पिशुनं चेति द्वयमपि ॥ १० ॥ रञ्जनाद् रक्तमत एवाऽसृक्संज्ञम् ॥ ११ ॥ धीरं स्थिररागम् ॥ १२ ॥ पीतयत्यङ्गं पीतनम् ॥ १३ ॥ दीपयति दीपनम् ॥१४॥३०९॥

शेषश्चात्र–

कुङ्कुमे तु करटं वासनीयकम् ॥
प्रियङ्गुपीत कावेरं घोर पुष्परजोवरम् ।
कुसुम्भं च जवापुष्पं कुसुमान्तं च गौरवम् ॥

लवङ्गं देवकुसुमं श्रीसंज्ञ

लूयते लवङ्गं "पतितमि-" ॥ ( उणा–९८ ) ॥ इत्यङ्ग ॥ १ ॥ देव द्युतिमत्, देवाना वा कुसुमं देवकुसुमम् ॥ २ ॥ श्रीसज्ञं श्रीपर्यायमित्यर्थ· ॥ ३ ॥

अथ कोलकम् ।
कक्कोलकं कोशफलं

कोलति कोल, के कोलकम् ॥ १ ॥ कचते दीप्यते कक्कोलं "पिञ्छोलकल्लोल-" ॥ ( उणा–४९५ ) ॥ इत्योले निपात्यते, के कक्कोलकम् ॥ २ ॥ कोशे फलान्यस्य कोशफलम् ॥ ३ ॥

कालीयकं तु जापकम् ॥ ३१० ॥

कालायां भूमौ भवं कालीयं, के कालीयकम् ॥ १ ॥ जापकादिभवत्वाज्जापकं कालानुसार्यमपि ॥२॥३१०॥

यक्षधूपो बहुरूपः सालवेष्टोऽग्निवल्लभः ।
सर्जमणिः सर्जरसः राल. सर्वरसोऽपि च ॥ ३११ ॥

यक्षं धूपयति यक्षधूपः ॥ १ ॥ नानाकृतिगन्धत्वाद् बहुरूप ॥ २ ॥ सालस्य वेष्टो निर्यास· सालवेष्ट ॥ ३ ॥ अग्नेर्वल्लभोऽग्निवल्लभ. ॥ ४ ॥ सर्जस्य तरोर्मणिरिव सर्जमणि ॥ ५ ॥ सर्जस्य रस· सर्जरसः ॥ ६ ॥ राति प्रीति रालः, पुंक्लीबलिङ्ग "भिल्लाच्छभल्ल-" ॥ ( उणा–४६४ ) ॥ इति ले साधुः ॥ ७ ॥ सर्वे रसा अत्र सर्वरस ॥८॥३११॥

धूपो वृकात् कृत्रिमाच्च तुरुष्कः सिल्हपिण्डकौ ।

वृकशब्दात् कृत्रिमशब्दाच्च परो धूपः, वृकान् धूपयति वृकधूपः, कृत्रिमाणां धूपश्च कृत्रिमधूप. ॥१॥२॥ तुरुष्को यवनदेशज·, पुंक्लीबलिङ्ग·; यावनोऽपि ॥३॥ सिलन् उञ्छे, सिलति सिल्ह , दन्त्यादि· सिलं जहातीति वा ॥४॥ पिण्डयति पिण्डक , द्रव्यान्तरैः सह पिण्डित स्वरूपाद् न च्यवते ॥ ५ ॥

पायसस्तु वृक्षधूपः श्रीवासः सरलद्रवः ॥ ३१२ ॥

पयसो द्रुमक्षीरस्यायं पायस , पयसो विकार इतिरित्यन्वये "पयोद्रोर्य." ॥६।२।३५॥ इति य प्राप्नोति ॥ १ ॥ वृक्षस्य धूपो वृक्षधूप ॥ २ ॥ श्रियो वासः श्रीवास. ॥ ३ ॥ सरलस्य देवदारुभेदस्य द्रवो निर्यास· सरलद्रव ॥ ४ ॥ ३१२ ॥

शेषश्चात्र–

वृक्षधूपे तु श्रीवेष्टो दधिक्षीरघृताह्वयः ॥

स्थानात् स्थानान्तरं गच्छन् धूपो गन्धपिशाचिका ।

धूप्यतेऽनेनेति धूपः गन्धद्रव्ययोगविशेष , गन्धेन पिशाचिकेवाऽस्खलिताऽऽस्यगतित्वाद् गन्धपिशाचिका ॥ १ ॥

स्थासकस्तु हस्तबिम्बं

तिष्ठत्यङ्गे स्थासक· "कीचकपेचक-" ॥ ( उणा–३३ ) ॥ इत्यके निपात्यते ॥ १ ॥ हस्तस्य बिम्बं हस्तबिम्बं कुङ्कुमादिरचितम् ॥ २ ॥

अलङ्कारस्तु भूषणम् ॥ ३१३ ॥

परिष्काराऽऽभरणे च

अलं क्रियतेऽनेनेत्यलङ्कार. कटककेयूरादि. ॥ १ ॥ भूष्यतेऽनेन भूषणं पुंक्ली-

त्रिलिङ्ग ॥ २ ॥ २१३ ॥ परिष्क्रियतेऽनेन परिष्कार ॥ ३ ॥ आ समन्ताद् भ्रियते शोभाऽनेनाऽऽभरणम् ॥ ४ ॥

चूडामणिः शिरोमणिः ।

चूडाया शिरसि च मणिश्चूडामणि ,शिरोमणि , चूडारत्नशिरोरत्ने अपि॥१॥२॥

नायकस्तरलो हारान्तर्मणिः

नयति शोभा नायक ॥ १ ॥ तरतीव कान्त्या तरल "मृदिकन्दि-" ॥ ( उणा–४६५) ॥ इत्यलः ॥ २ ॥ हारस्याऽन्तर्मध्ये स्थितो मणिः ॥

मुकुटं पुनः ॥ २१४ ॥

मौलिः किरीटं कोटीरमुष्णीषं

मङ्क्यते मण्ड्यते शिरोऽनेन मुकुटं "मङ्केर्मकमुकौ च" ॥ ( उणा–१५४ ) ॥ इत्युट, मुखे कुव्यते वा, क्लीबोऽयम्, पुंस्यपि वैजयन्ती, यदाह-"मौलिः कोटीरमुष्णीषं किरीटं मुकुटोऽस्त्रिया" मकुटोऽपि ॥१॥२१४॥ मूयते शिरसि मौलि , पुंस्त्रीलिङ्गः ॥ २ कीर्यते किरीटं "तॄकृकृपि-" ॥ (उणा–१५१) ॥ इति किदीट ॥ ३ ॥ कुटति कोटीरं "कृशॄपॄ-" ॥ ( उणा–४१८ ) ॥ इतीर ॥ ४ ॥ उषत्युश्रियमुष्णीषं "उषेर्णोऽन्तश्च" ॥ ( उणा–५५६ ) ॥ इतीष , किरीटाद्यास्त्रयः पुक्लीबलिङ्गा ॥ ५ ॥

पुष्पदाम तु ।

मूर्ध्नि माल्यं माला स्रक्

मूर्धनि पुष्पदाम मालैव माल्य, भेषजादित्वाट् ट्यण् ॥ १ ॥ मान्ति पुष्पाण्यस्या माला "शामाश्या-" ॥ (उणा–४६२) ॥ इति लः, मल्यते धार्यते इति वा ॥२॥ सृज्यते पुष्पैः स्रक् "क्रुत्संपदादि-" ॥५।३।११४॥ इति क्विपि "ऋत्विज्दिश्-" ॥२।१।६९॥ इति गत्व, सूत्रपाठाद् ऋतो रत्वं च, सर्तेरौणादिकः कज् वा ॥ ३ ॥

गर्भकः केशमध्यगम् ॥ २१५ ॥

केशमध्यगतं पुष्पदाम गर्भस्थत्वाद् गर्भक ॥१॥२१५॥

प्रभ्रष्टकं शिखालम्बि

शिखालम्बि दाम केशमध्यात् प्रभ्रश्यति स्म प्रभ्रष्टं, के प्रभ्रष्टकम् ॥ १ ॥

पूरोन्यस्तं ललामकम् ।

लाति शोभा ललाम मुण्डमालाख्यं "सात्मन्नात्मन्-" ॥ ( उणा–९१६ ) ॥ इति मनि निपात्यते, लडत्यग्रे ललाममित्यदन्त वा "रुक्मग्रीष्म-"॥ (उणा–३४६)॥ इति मे निपात्यते, द्वाभ्यामपि के ललामकम् ॥ १ ॥

तिर्यग् वक्षसि वैकक्षं

यज्ञोपवीतन्यायेन तिर्यग् वक्षसि विक्षिप्तं दाम विकक्षाया भवं वैकक्षम् ॥१॥

प्रालम्बमृजुलम्बि यत् ॥ ३१६ ॥

कण्ठादुभयतो वक्षसि लम्बमानं पुष्पदाम प्रालम्बते प्रालम्बम् ॥१॥३१६॥

सन्दर्भो रचना गुम्फः श्रन्थनं ग्रन्थनं समाः ।

सन्दर्भणं सन्दर्भ ॥ १ ॥ रचनं रचना ॥ २ ॥ गुम्फनं गुम्फ. ॥ ३ ॥ श्रथ्यते श्रन्थनम् ॥ ४ ॥ ग्रथ्यते ग्रन्थनम् ॥ ५ ॥

शेषश्चात्र-

रचनायां परिस्यन्द प्रतियत्नः ॥

तिलके तमालपत्रचित्रपुण्ड्रविशेषकाः ॥ ३१७ ॥

तिलति तिलकं, पुंक्लीबलिङ्ग "भ्रुधून्दि-" ॥ (उणा-२९) ॥ इति किदकः, तिलाकृतिर्वा तत्र ॥ १ ॥ तमालपत्राकृति कस्तूर्यादिना ललाटे तमालपत्रम् ॥ २ ॥ चित्र्यते चित्रं, चित्रकमपि ॥ ३ ॥ पुण्यति पुण्ड्यते वा पुण्ड्रं "खुरक्षुर-" ॥ (उणा-३९६) ॥ इति रे निपात्यते ॥ ४ ॥ विशिनष्टि ललाटं विशेषक, पुंक्लीबलिङ्गः, इत्थं तिलकभेदा, एतेषा पर्यायत्वं त्वदूरविप्रकर्षात् ॥५॥३१७॥

आपीडशेखरोत्तंसाऽवतंसाः शिरसः स्रजि ।

आपीड्यते शिरस्यापीड ॥ १ ॥ शाखति व्याप्नोति शिर शेखर "शाखेरि-देतौ चात" ॥ (उणा-४००) ॥ इत्यर ॥ २ ॥ उत्तंस्यतेऽनेनोत्तंस, अवतंस्यतेऽनेनाऽवतंस अवतनोति शोभामिति वा "व्यवाभ्या-" ॥ (उणा-५६५) ॥ इति स "वाऽवाप्योस्तनि-" ॥ ३।२। १५६ ॥ इत्यवस्य वादेशे वतंसोऽपि । शेखरादय. पुंक्लीबलिङ्गा ॥ ३ ॥ ४ ॥

उत्तरौ कर्णपूरेऽपि

उत्तरावुत्तंसावतंसौ कर्णं पूरयति कर्णपूरस्तत्र, पुंक्लीबलिङ्गोऽयम् ॥१॥२॥३॥

पत्रलेखा तु पत्रतः ॥ ३१८ ॥

भङ्गिवल्लिलताङ्गुल्यः

द्राविड-कालिङ्गादिभेदेन पत्राकृतिर्लेखा पत्रलेखा स्त्रीणां कपोलस्तनमण्डलादिषु कस्तूरिकादिभि पत्ररचना ॥ १ ॥ पत्रशब्दात् भङ्ग्यादय - पत्रभङ्गि ॥ २ ॥ पत्रवल्लि ॥३॥ पत्रलता ॥४॥ पत्राङ्गुली, एव पत्रवल्लरी-पत्रमञ्जर्यादयोऽपि ॥५॥

पत्रपाश्या ललाटिका ।

पत्रपाशानां समूहः पत्रपाश्या "पाशादेश्च ल्य" ॥६।२।२५॥१॥ ललाटे भवा ललाटिका ललाटमण्डनं "कर्णललाटात् कल्" ॥ ६ । ३ । १४१ । २ ॥

वालपाश्या पारितथ्या

वालपाशे साधुर्वालपाश्या वालवन्धनार्थं मुक्तावलय., वालेषु पाशसमूहो वा फुल्लतिकादि ॥ १ ॥ परितस्तथाभवा पारितथ्या "परिमुखादेरव्ययीभावात्" ॥६ । ३ । १३६ ॥ इति ञ्य, पायतिथ्या वा ॥ २ ॥

कर्णिका कर्णभूषणम् ॥ ३१९ ॥

कर्णे भवा कर्णिका "कर्णललाटात् कल्" ॥ ६ । ३ । १४१ । १ । ३१९ ॥

ताडङ्कस्तु ताडपत्रं कुण्डलं कर्णवेष्टकः ।

ताड्यते कर्णोऽनेन ताडङ्क "रालापाका-" ॥ (उणा–६३) ॥ इत्युपलक्षणादङ्क. ॥१॥ ताडपत्रनिर्मितत्वात् ताडपत्रं, ताडपत्रवत् सौवर्णोऽपि ॥ २ ॥ कुण्डते दहत्यलक्ष्मीं कुण्डल, पुंक्लीवलिङ्ग "मृदिकन्दि-" ॥ (उणा–४६५) ॥ इत्यल. ॥ ३ ॥ कर्णं वेष्टते कर्णवेष्ट के कर्णवेष्टक, द्वौ द्वौ भिन्नार्थावित्येके ॥ ४ ॥

शेषश्चात्र– अथ कुण्डले कर्णादर्शः ॥

उत्क्षिप्तिका तु कर्णान्दुः

उत्क्षिप्यते स्मोत्क्षिप्तिका ॥१॥ कर्णयोरन्यते कर्णान्दु "भृमृतृ-"॥ (उणा–७१६) ॥ इति वहुवचनादु स्त्रीलिङ्ग, वैजयन्तीकारस्तु–"कर्णान्दू" इत्यूकारान्तमाह ॥ २ ॥

वालिका कर्णपृष्ठगा ॥ ३२० ॥

वलते वालिका ॥१॥३२०॥

ग्रैवेयकं कण्ठभूषा

ग्रीवायां जातं ग्रैवेयकं "कुलकुक्षि–" ॥६।३।१२॥ इत्येयकञ् ॥१॥

लम्वमाना ललन्तिका ।

लम्वमाना कण्ठभूषा लडत्यलङ्करोति ललन्ती, के ललन्तिका ॥ १ ॥

प्रालम्विका कृता हेम्ना

हेम्ना कृता कण्ठभूषा प्रालम्वते प्रालम्विका ॥१॥

उरःसूत्रिका तु मौक्तिकैः ॥ ३२१ ॥

मौक्तिकैः कृता कण्ठभूषा, उरसि सूत्रमस्या उरःसूत्रिका ॥१॥३२१॥

हारो मुक्तातः प्रालम्बस्रक्कलापावलीलताः ।

ह्रियतेऽनेन चित्तमिति हार , पुंस्त्रीलिङ्ग ॥१॥ मुक्ताशब्दात् परे प्रालम्बादय', मुक्ताप्रालम्ब ॥२॥ मुक्तास्रक् ॥३॥ मुक्ताकलाप ॥४॥ मुक्तावली ॥५॥ मुक्तालता ॥६॥

देवच्छन्दः शतं

उत्तरत्र 'पञ्च हारफलं लता' इत्यतो लता इति सम्बध्यते तेन शतंलतेति लभ्यते, देवानां छन्दोऽभिप्रायोऽत्र देवच्छन्द ॥१॥

साष्टं त्विन्द्रच्छन्दः सहस्रकम् ॥ ३२२ ॥

अष्टोत्तर सहस्रं लता', इन्द्रस्य छन्दोऽत्रेन्द्रच्छन्दः ॥१॥ ३२२ ॥

तदर्धं विजयच्छन्दः

तस्येन्द्रच्छन्दस्यार्धं चतुरधिकानि लताना पञ्चशतानीत्यर्थ , विजयाय च्छन्दोऽत्र विजयछन्द ॥१॥

हारस्त्वष्टोत्तरं शतम् ।

लतानामष्टोत्तरं शतम् ॥१॥

अर्धं रश्मिकलापोऽस्य

अस्य हारस्यार्धं चतुष्पञ्चाशल्लता इत्यर्थ , रश्मीना कलापोऽत्र रश्मिकलाप ॥१॥

द्वादश त्वर्धमाणव ॥ ३२३ ॥

द्वादश लता उत्तरस्मादर्धेन माणव इव लघुत्वादर्धमाणवः ॥१॥ ३२३ ॥

द्विर्द्वादशार्धगुच्छः स्यात्

द्विगुणिता द्वादश लताश्चतुर्विंशतिरित्यर्थ , गुच्छस्यार्धमर्धगुच्छ ॥१॥

पञ्च हारफलं लताः ।

पञ्चलता', हारस्य फलमत्र हारफलम् ॥ १ ॥

अर्धहारश्चतुःषष्टिः

चतु षष्टिर्लता., अर्धं हारस्यार्धहारः ॥ १ ॥

गुच्छमाणवमन्दराः ॥३२४ ॥

अपि गोस्तनगोपुच्छावर्धमर्धं यथोत्तरम् ।

यथोतरमर्धमर्धं यथा अर्धहारस्यार्धं द्वात्रिंशल्लता., गुह्यच्छादनाद् गुच्छ. ॥१॥

गुच्छार्धं षोडश लता अल्पत्वाद् माणव ॥१॥ माणवार्धमष्टौ लता मन्थते स्तूयते मन्दर ॥ १ ॥ ३२४ ॥ मन्दरार्धं चतस्रो लता गोस्तनवल्लम्बमाना. ॥१॥ गोस्तनस्यार्धं द्वे लते गोपुच्छाकृतित्वाद् गोपुच्छ. ॥ १ ॥ अन्ये तु–

"चतु षष्टिलतो हारोऽथाष्टहीनो यथोत्तरम् ।
रश्मिकलापो माणवकोऽर्धहारोऽर्धगुच्छक ॥ १ ॥
कलापच्छन्दो मन्दरस्य गुच्छसप्ततियष्टिक. ।" इत्याहु ॥

अथोपसंहारमाह–

इति हारा यष्टिभेदात्

इत्येवं लताभेदाच्चतुर्दश हारा इति ॥

एकावल्येकयष्टिका ॥ ३२५ ॥

कण्ठिकाऽपि

यष्टिर्लता सरिकेत्येकार्था एका यष्टिरस्या एकयष्टिका, एका आवलते एकावली ॥ १ ॥ २ ॥ ३२५ ॥ कणति कण्ठते वा कण्ठा, के कण्ठिका ॥ ३ ॥

अथ नक्षत्रमाला तत्संख्यमौक्तिकैः ।

नक्षत्रसंख्यै सप्तविंशत्या मौक्तिकैर्नक्षत्रमालेव नक्षत्रमाला ॥ १ ॥

केयूरमङ्गदं बाहुभूषा

के बाहुशीर्षे यौति केयूरं, पृषोदरादित्वात् ॥ १ ॥ अङ्गं दयतेऽङ्गदम् "अङ्गदो दोर्भूषा" इति पुंस्यमर ॥ २ ॥ ३ ॥

अथ करभूषणम् ॥ ३२६ ॥

कटको वलयं पारिहार्यावापौ च कङ्कणम् ।

हस्तसूत्रं प्रतिसरः

करस्य भूषणं करभूषणम् ॥ १ ॥ ३२६ ॥ कटति कटक "वृकृतॄ–" ॥ (उणा-५४०) ॥ इत्यक ॥ २ ॥ वलते वलयं "कुगुवालि–" ॥ (उणा-३६५) ॥ इत्यय ॥ ३ ॥ परिहारे भव पारिहार्य. "परिमुखादे-" ॥ ६ । ३ । १३६ ॥ इति ञ्य, पारिवद् ह्रियते वा परिहार्य एव वा, प्रज्ञादित्वादण् पारिहार्यमित्यन्ये ॥ ४ ॥ आ उप्यते आवाप ॥ ५ ॥ कङ्कते हस्तं कङ्कणम् ॥ ६ ॥ हस्ते सूत्र्यते हस्तसूत्रम् । एते सप्त पुंक्लीबलिङ्गा ॥ ७ ॥ प्रतिसराति प्रतिसर , त्रिलिङ्ग , केचित्तु कङ्कणादीन् मङ्गल्यसूत्रवाचकत्वेन पृथगाहुः ॥ ८ ॥

ऊर्मिका त्वङ्गुलीयकम् ॥ ३२७ ॥

ऊर्मिप्रतिकृतिरूर्मिका ॥ १ ॥ 'अङ्गुल्या भवमङ्गुलीयं " जिह्वामूलाङ्गु- "॥ ६ । ३ । १२७ ॥ इतीय , केऽङ्गुलीयकम् । 'अङ्गुच्छलं' देश्याम् ॥ २ ॥ ३२७ ॥

**सा साक्षराऽङ्गुलिमुद्रा**

सा ऊर्मिकाऽक्षराङ्किता अङ्गुल्या मोदते, अङ्गुलीं मुद्रयति वाऽङ्गुलिमुद्रा ॥१॥

**कटिसूत्रं तु मेखला ।**

**कलापो रसना सारसनं काञ्ची च सप्तकी ॥ ३२८ ॥**

कटे सूत्रं कटिसूत्रम् ॥१॥ मीयते मेखला "मिग खलश्चैव"॥(उणा-४९७)॥ इति खल., मुहु स्खलतीति वा, मेहनस्य खं मेहनखं तस्य माला वा पृषोदरादित्वात् ॥२॥ कल्पते कलापः "कलेराप "॥ (उणा-३०८) ॥३॥ अश्नुते कटिं रसना, स्त्रीक्लीबलिङ्ग. "अशो रश्चादौ" ॥ (उणा-२७०) ॥' इत्यन' ॥ ४ ॥ सारं सनोति सारसनम् ॥५॥ कञ्चते दीप्यते, कञ्च्यते वध्यते वा काञ्चि "कमिवमि-" ॥ (उणा-६१८) ॥ इति णौ साधु , ङया काञ्ची ॥६॥ सपति समवैति सप्तकी "कीचक-" ॥ ( उणा-३३ )॥ इत्यके निपात्यते , उत्तरत्र 'पुंस्कटिस्था' इतिवचनादत्र स्त्रीकट्यामिति लभ्यते ॥७॥ ३२८ ॥

शेषश्चात्र– मेखला तु लालिनी कटिमालिका ॥

**सा शृङ्खलं पुंस्कटिस्था**

सा मेखला पुंस्कटिस्था शीर्यते शृङ्खल त्रिलिङ्ग "श्रो नोन्तो ह्रस्वश्च" ॥ (उणा-४९८) ॥ इति खल , शृङ्गे, खलतीति वा ॥१॥

**किङ्कणी क्षुद्रघण्टिका ।**

कङ्कते याति कटिं किङ्कणि "कङ्केरिच्चाऽस्य वा ॥ (उणा-६३९) ॥ इत्यणि', ङयां किङ्कणी ,किञ्चित्क्वणतीति वा । 'किङ्किणी'त्येके ॥ १ ॥ क्षुद्रा अल्पा घण्टिका घुर्घरकाख्या ॥२॥

शेषश्चात्र– अथ किङ्कण्या घर्घरी विद्या विद्यामणिस्तथा ॥

**नूपुरं तु तुलाकोटिः पादतः कटकाङ्गदे ॥ ३२९ ॥**

**मञ्जीरं हंसक शिञ्जिनी**

नुवति स्तौतीव नूपुरं, पुंक्लीवलिङ्ग "श्वशुर-" ॥ (उणा-४२६) ॥ इत्युरे निपात्यते ॥१॥ तुलाकृतेर्जङ्घाया कोटिरिव तुलाकोटि , पुंक्लीवलिङ्ग ॥२॥ पादशब्दात् कटकाङ्गदे पादस्य कटक पादकटकं, पुंक्लीवलिङ्ग ॥३॥ पादोऽङ्गदमिव पादाङ्गदम्॥४॥ ॥३२९॥ मञ्जि सौत्रो मञ्जति मञ्जीर "कृशॄपॄ-" ॥ (उणा-४१८) ॥ इतीर.' मञ्जु मधुरमीरयति वा पृषोदरादित्वात्, हंसवत् कायति हंसकं,पुंक्लीवलिङ्गावेतौ ॥५॥ ॥६॥ शिञ्जेऽव्यक्तं शब्दं करोति शिञ्जिनी, ग्रहादित्वाद् णिन्॥७॥

कृती कृतार्थश्च विज्ञोऽभिज्ञो वैज्ञानिकोऽपि च।
विदग्धे छेक-च्छेकालौ छेकिलश्च, कलाविदि ॥ ७ ॥
कलाज्ञश्च कलज्ञोऽपि, क्षुण्णः संस्कृतवाचकः।
तृतीयवर्गप्रान्त्यासो, वक्नुर्वग्नु-वचक्नुकौ ॥ ८ ॥
वाग्मिनि स्यात्, वक्तरि तु वदावद-वदौ समौ।
अवाक्श्रुतावेडमूकानेडमूकावनेडकः ॥ ९ ॥
कलमूकश्चान्ध-शठ-मूर्खवाच्यपि संमतः।
सतामनेडमूकश्चाऽस्फुटवाचि तु काहलः ॥ १० ॥
लोहलोऽपि जड-कडौ, ज्ञायके विदुरस्तथा।
विन्दुस्त्रिक-तुर्यवर्गमध्यौ[1] कट्टुर-कद्दरौ ॥ ११ ॥
अत्यन्तकुत्सिते, क्षिष्णुर्णान्तो निराकरिष्णुके।
प्रियंवदे शक्नु-शक्कौ वदान्यश्च वदन्ययुक् ॥ १२ ॥
दानशीलेऽप्येमू[2], मूर्खे बालिशो बाडिशो जडः।
जलो मुहेर-मुहिरावायो[3]ऽयःपूर्वशूलिकः ॥ १३ ॥
भवेद् राभसिके, लोकप्रीणके तु पृण-प्रिणौ।
प्रीणश्च लोकं[4]पूर्वाः स्युः, परायत्ते परात्परौ[5] ॥ १४ ॥
वश-वन्तौ गृह्यकश्च गृह्या-ऽऽगृह्यकसंयुतः।
नायके नेत्र-नेतारावीडीश[6] ईश्वरस्तथा ॥ १५ ॥

---

१ तृतीयवर्गस्य टकारः, चतुर्थवर्गस्य दकारश्च मध्ये ययोरेतादृशौ कट्टुर-कद्दरावित्यर्थः। २ वदान्य-वदन्यौ। ३ आयोऽयःशब्दौ पूर्वौ यस्य तादृशः शूलिकशब्द आय.शूलिक अय.शूलिकश्चेत्यर्थः। ४ लोकम्पृणः, लोकम्प्रिणः, लोकम्प्रीणश्चेत्यर्थः। ५ परवशः, परवांश्चेत्यर्थः। ६ ईड्, तालव्यशान्तः।

पति-पाती ऋज-रिजाविडीडौ डान्तिमावुभौ ।
ह्रस्व-दीर्घादी[1] प्रभुयुग् विभुश्चाप्यथ वेतने ॥ १६ ॥
भृति-भृत्ये भर्म भर्मण्या कर्मण्याऽथ भारिके ।
भारवाड् भारवाहश्चाप्यथो वार्तावहे जने ॥ १७ ॥
वैवधिको विवधिको वीवधिकोऽथ भारके ।
भरो विवधो वीवधः स्यादथो भारयष्टिका ॥ १८ ॥
विहङ्गिका विहङ्गिमा, विक्रान्ते शूर-सूरकौ ।
कातरे भीरुको भीरुर्भीलुकस्त्रस्नु-त्रस्तकौ ॥ १९ ॥
भृशाकुले समुत्पिञ्ज उत्पिञ्जल-कपिञ्जलौ ।
अथो महेच्छेऽनुदार उदारोदात्तकावपि ॥ २० ॥
दयालौ तु कृपालुः स्यात् कृपालुरनुकम्पने ।
कारुण्यं करुणा हिंस्रे हिंसीरोऽपि, निबर्हणे ॥ २१ ॥
विशारणं विशरणं निर्वासन-प्रवासने ।
उद्वासनं, वधार्हे तु शैर्षच्छेदिकसंयुतः ॥ २२ ॥
शीर्षच्छेद्यो, मृते प्रेत-परेतौ, तदर्हेऽर्पणे ।
तदर्थे चोर्ध्वदेहिकमौर्ध्वदेहिकमित्यपि ॥ २३ ॥
ऊर्ध्वदैहिकमप्यग्न्याधाने[2] तु मृतदाहगे[3] ।
चिति-चित्या-चिताः प्रोक्ताः, ऋजौ तु प्राञ्जलोऽञ्जसः ॥२४॥
अनृजौ तु शठः शण्ठो, धूर्ते व्यंशक-व्यंसकौ ।
शठ-शण्ठौ च षण्ढेऽपि, जालिके मायि-मायिकौ ॥२५॥

---

१ ह्रस्वदीर्घावादी ययोस्तौ डकारान्तौ ह्रड् ह्रीड् चेत्यर्थः । २ अधिकरणे कृत् । ३ मृतदाहं गच्छतीति मृतदाहगस्तस्मिन्, अग्न्याधानविशेषणमिदम् ।

मायावी, दाण्डाजनिको दण्डाजनिक इत्यपि ।
मायायां शठता-शाठ्ये, व्याजे लक्ष्यं तु लक्षयुक् ॥२६॥
संख्यायामपि, पिशुने मत्सरो मत्सरी खलः ।
प्रखलः खुल्लकः क्षुल्लः क्षुद्रकः क्षुद्रसंयुतः ॥ २७ ॥
कौलीने वादिको जाते जातो जातात्परो मतः ।
तस्करे चोरटश्चोर-चौरौ पाटच्चरान्वितः ॥ २८ ॥
पटच्चरश्चौरकर्म चौर्यं चोरिका स्तेनवत् ।
स्तेयं स्तैन्यं, हृतधने लोप्त्रं लोत्रं च लोद्रकम् ॥२९॥
मन्दे त्वलस आलस्यश्चतुरे दक्ष-दक्षिणौ ।
उष्णकोष्णौ, दातरि तु स्यादुदारोऽनुदारयुक् ॥ ३० ॥
बहुप्रदे स्थूललक्षः स्थूललक्ष्योऽपि यान्तिमः[1] ।
दानेंहतिरंहितिश्च प्रादेशन-प्रदेशने ॥ ३१ ॥
निर्वापणं निर्वपणं, याचके तु वनीपकः ।
वनीयक-वनबकौ, प्रार्थनायां तु याचना ॥ ३२ ॥
याञ्चैषणाऽध्येषणापि भवितरि भविष्णुयुक् ।
भूष्णुर्भविष्यति भवी भाव्यथो स्यात् प्रसारिणि ॥३३॥
विसारी च विसृमरो विसृत्वरयुतो मतः ।
लज्जाशीले तु लज्जालुर्लज्जूः स्यात्, क्षमिता क्षमी ॥३४॥
क्षन्ता साहिष्णुः सहने, ईर्ष्यालुः कुहने[2] स्मृतः ।
ईर्ष्युश्च, क्रोधने क्रोधी, बुभुक्षायां तु रोचकः ॥३५॥

---

१ यकारान्त इत्यर्थः । २ ईर्ष्यावति ।

रुचिः क्षुधा-क्षुधौ, तृष्णक् तृषिते तृष्णकोऽपि च ।
क्षुदसहे क्षुधारुः स्यात् क्षुधालुः, शीतकाऽसहे ॥ ३६ ॥
शीतारुश्च सशीतालुः, पिपासायां तृषा-तृषौ ।
तृष्णा-तर्षौ च, लिप्सायां [1]त्रयोऽन्त्या अपि, भक्षके॥३७॥
आशितश्चाशिरो, भक्ते कुरुः कूरं च दग्धिका ।
भिस्साटा भिस्सटा भिस्सा, दधिसर्वरसाग्रके ॥३८॥
दधिमण्डं मण्डमपि, भक्तमण्डे तु [2]प्रोऽङ्स्रवः ।
[3]निप्रात् स्रावश्च, श्राणायां विलेपी च विलेपिका ॥३९॥
विलेपनी विलेप्याऽपि क्वाथिका क्वथिकाऽपि च ।
तरलं तरला, सूपे सूदोऽप्यथ तिलान्नके ॥ ४० ॥
कृसर-त्रिसरौ पुंस्त्री, पिष्टके पूप-पूपकौ ।
पूपिकायां पौलि-पौल्यौ पूलिका पोलिकापि च ॥४१॥
पूपली चेषत्पक्के त्वभ्यूषाऽभ्योषाऽभ्युषास्त्रयः ।
निष्ठानोऽस्त्री तेमने स्यात्, सठः पत्रफलादिके ॥४२॥
शाकं साकं हरितके, करम्भो [4]दधिसक्तुषु ।
करम्बोऽपि, घार्तिके तु पूरः स्याद् [5]घृत-पिष्टतः ॥४३॥
घृतवरोऽवसेकिमे वटको वटसंयुतः ।
[6]स्नेहभृष्टतण्डुलेषु भरुजी भरुजापि च ॥ ४४ ॥

---

१ तृडादयस्त्रयः शब्दा लब्धुमिच्छायामपीत्यर्थः । २ प्रस्रव, आस्रवश्च । ३ निप्रशब्दाभ्यां परः स्रावशब्द, निस्राव-प्रस्रावावपीति यावत् । ४ दधिप्रधानेषु सक्तुष्वित्यर्थं । ५ घृतपूर, पिष्टपूर इत्यर्थः । ६ स्नेहैर्घृतादिभिः सह भृष्टेषु भर्जितेषु तण्डुलेषु ।

मर्मराले पर्पटश्चपटः, पृथुके [1]चेः पुटः ।
चिपिटश्चिपिटिका शर्करायामुपला सिता ॥ ४५ ॥
सितोपला मधुधूलौ खण्डो वर्गद्वितीयखः ।
फाणिते स्यात्तु मत्स्याण्डी मत्स्याण्डिश्च मत्स्यण्ड्यपि॥४६॥
मत्सण्डी [2]खण्डतो योज्या शर्करा सर्करापि च ।
शिखरण्यां रसाला स्याद् रसिता मार्जितायुता ॥४७॥
मर्जिता, मुद्गादिरसे यूर्यूषस्त्रिषु जुषयुक् ।
दुग्धे गव्यं गोरसश्च रसोत्तमरसे समे ॥ ४८ ॥
क्षीरस्य विकृतौ कूर्चिः कूर्चीका कूचिकान्विता ।
कूर्चिकापि किलाटी स्यात् किलाटा च किलाटयुक्॥४९॥
द्रप्स-द्रप्स्ये दध्न्यघने, हविष्य-हविषी घृते ।
रसायन-गोरसौ द्वौ घोले, तक्रे त्वरिष्टयुक् ॥ ५० ॥
रिष्टमौदश्वितौदश्वित्के संस्कृत उदश्विति ।
पिच्छिले विजलं प्रोक्तं विजिलं विज्जलं विजम् ॥५१॥
विजेविलं विजिपिलमारनाले तु काञ्चिकम् ।
काञ्जिकं च सुवीराऽऽम्लं सौवीरं [3]चाभितः षुतम् ॥५२॥
कुल्माषाभिषुतं चैव कुल्माषं [4]चार्धराद्धके ।
माषादौ तु कुल्माषः स्यात् कुल्मासश्चाप्युपस्करे ॥५३॥
दन्त्य-तालव्य-मूर्द्धन्यमध्यः स्याद् द्वेषवारकः ।
तिन्तिडीक-तन्तिडीके चुक्रे पक्षण्यपि स्मृते ॥५४॥

---

१ चिपुट इत्यर्थः । २ खण्डशर्करा, खण्डसर्करा । ३ अभिषुतम् ।
४ अर्धपक्के माषादावित्यस्य विशेषणमिदम् ।

राजिकायामासुरी स्यादसुरी च क्षुधा-क्षतात्[1] ।
परोऽभिजननः शब्दो योज्यते शब्दवेदिभिः ॥ ५५ ॥
कुस्तुम्बुरुर्वार्धियुकारस्तस्मिन्[2] धान्यं च धान्यकम् ।
धन्या धन्याकं धान्याकं धानेयक-धनीयके ॥ ५६ ॥
धनकोऽथ कोलके स्याद् मरीचं मरिचं तथा ।
ऊषणं ह्युपणं विश्वा शुण्ठी शुण्ठिश्च, पिप्पली ॥५७॥
उषणा स्यादूषणापि, कृष्णा[3] च कृष्णतण्डुला ।
गजपिप्पल्यां वशिरो वसिरः, सर्वग्रन्थके ॥ ५८ ॥
ग्रन्थकं शिरोऽनादन्तः, क्ली सान्तं चटकाशिरः ।
व्योषे[4] त्रेः कटु-कटुके, अजाजी जीर-जीरकौ ॥ ५९ ॥
जीरणो जरणः कणः जीरकः कृष्णजीरके ।
सुषवी दन्त्य-मूर्धन्य-तालव्यान्तर्गता पृथुः ॥ ६० ॥
पृथ्वी उत्कुञ्चिका चोपकुञ्चिकाप्यथ हिङ्गुनि ।
वाल्हीकं वाल्हिकं, जग्धौ खादनं खदनं घसिः ॥६१॥
निघसोऽपि विष्वाणाऽवष्वाणौ जमन-जेमने ।
ग्रासे गुडेरक-गुडौ गुडेरोऽपि गडोलयुक् ॥ ६२ ॥
गण्डोलः कवलोपेतः कवकः, सुहिते पुनः ।
आघ्राता-ऽऽघ्राणकौ, भुक्तत्यक्ते फेला च फेलियुक् ॥६३॥
मांसाशिनि शाष्वलः स्याच्छौष्कलः शाष्कलिस्तथा ।

१ क्षुधाक्षतशब्दाभ्यां परोऽभिजननशब्द. क्षुधाभिजनन. क्षताभिजनन- इति । २ वार्धिप्रमिताः, चत्वार इत्यर्थ. । ३ तिक्तापिप्पली । ४ शुण्ठिमरीच- पिप्पलीनां युगपद्वाचकौ त्रिशब्दात्परौ कटु-कटुकशब्दौ ।

मौष्कुलिर्मौष्कुलो, लिप्सौ लोलुपो लोलुभोऽपि च ॥६४॥
लोलोऽपि गर्धनो गृध्नु-गृध्नौ चेहेह ईहने ।
कामश्च कामना, धृष्टो धृष्णुः स्याद् धृणजा सह॥६५॥
शुभंयुः शुभसंयुक्ते शुभंयश्चाप्यहंकृति ।
अहंयोऽहंयुसंयुक्तः, कामुके कामि-कामिनौ ॥६६॥
कामनः कमनः कम्रः कमरः कमितापि च ।
कामयिताऽभिक-भीकावन्तर्दुर्विपरो मनाः ॥ ६७ ॥
विचेतस्यभिशस्ते तु स्यादक्षारित-क्षारितौ ।
तिरस्कारे परीभावः परापर्यभितो भवः ॥ ६८ ॥
न्यक्कारः सनिकारः स्यात्, जागरूके तु जागरी ।
जागरिता, जागरणे जागर्या जागरस्तथा ॥ ६९ ॥
जागरा जाग्रिया, शङ्की संशयालुर्भवेदयम् ।
सांशयिको, दक्षिणार्हे दक्षिण्यो दक्षिणीयकः ॥ ७० ॥
दण्डिते दाप्यतः प्रोक्तो दायितोऽपि तथोच्यते ।
अर्च्ये प्रतीक्ष्यो निर्योपि, पूजिते त्वपचायितः ॥ ७१ ॥
अपचितोऽथार्हणायां पूजा पूज्याऽथ पीनके ।
बहुलो बहलः स्थूर-स्थूलौ पीवा सपीवरः ॥ ७२ ॥
मांसलांसलौ निर्दिग्धे, कृशे शात-शितौ स्मृतौ ।
तीक्ष्णेऽप्येतौ, बृहत्कुक्षौ तुन्दी तुन्दिक-तुन्दिलौ ॥७३॥
तुन्दिभोऽप्युदरिकश्चोदरिलोदरिणौ समौ ।

१ अन्तर्मनाः, दुर्मना, विमनाः । २ पराभवः, परिभवः, अभिभवः ।

अनासिके विख्र-विखू विग्रोऽपि, नतनासिके ॥ ७४ ॥
अवाद् भ्रट-टीट-नाटा नाशायां तन्नतावपि ।
खरनासे खरणसः खरणाः, खुरसदृग्नसि ॥ ७५ ॥
खुरणाः स्यात् खुरणसः, श्रोणे पङ्गुः सपङ्गुलः ।
स्यात् खल्वाटे तु खलति-खलतावल्पकायके ॥७६॥
पृश्नि-पृष्णी गडुले तु न्युब्ज-कुब्जौ, कुहस्तके ।
कुणि-कूणी, ह्रस्वकरपादे खर्वो निखर्वयुक् ॥७७॥
ह्रस्वशाखे वामनश्च वामा नान्तो, द्विनग्नके ।
वण्डो दन्त्योष्ठ्यवादिः स्यादल्पमेढ्रेऽपि, खञ्जके ॥७८॥
खोड-खोरौ च खोटोऽपि, पोगण्डो विकलाङ्गके ।
अपोगण्डोऽप्यूर्ध्वजानावूर्ध्वज्ञोर्ध्वज्ञकौ समौ ॥ ७९ ॥
विलजानौ प्रज्ञुः स्यात् प्रज्ञोऽपि, युतजानुके ।
संज्ञु-संज्ञौ च सर्वत्र जञसंयोग उच्यते ॥ ८० ॥
वलियुक्ते वलिनः स्याद् वलिभः, शस्तकेशके ।
केशवः केशिकः केशी, तुण्डिलो वृद्धनाभिके ॥८१॥
तुण्डिभस्तुन्दिलोऽभ्यान्ताऽभ्यमितौ ग्लान-ग्लास्नुकौ ।
व्याधिते, कच्छुरे तु स्यात्पामनः पामरस्तथा ॥८२॥
सातिसारेऽतिसारक्यतीसारकी, कफान्विते ।
श्लेष्मणः श्लेष्मलः, क्लिन्ननेत्रे तद्वाति पिल्लयुक् ॥८३॥
चिल्लश्चुल्लोऽपि, मूर्ते तु मूर्च्छालो मूर्च्छितोऽपि च ।

---

१ अवभ्रट., अवटीटः, अवनाट इति ।

पित्ते पलाग्निः पललज्वरोऽथ खेटयुक् खटः ॥ ८४ ॥
वलासो दन्त्य-तालव्यप्रान्तकः कथितो बुधैः ।
कफे, व्याधौ रोग-रुजौ रुजाऽप्यामय आमकः ॥ ८५ ॥
अमः, क्षये राजयक्ष्मा यक्ष्मा जक्ष्मापि नान्तकः ।
जक्ष्म-यक्ष्मावदन्तौ द्वौ, क्षवे क्षुत् क्षुतमप्यथ ॥ ८६ ॥
क्षवथौ काशः कासोऽपि, खसे पामा तु पामया ।
कच्छूः कच्छुः स्त्रियां सर्वे, खर्ज्वा कण्डूयनं मतम् ॥८७॥
कण्डूः कण्डूति-कण्डूये, व्रणे रुषो रुषा सह ।
ईर्मोऽस्त्रियामीर्म नान्तं, गण्डे विस्फोट-स्फोटकौ ॥८८॥
पिटकः पिटका तद्वत्पिटकं च, किलासके ।
सिध्म-सिध्मे, कुष्ठभेदे दर्द्रुर्दर्द्रूश्च दद्रुयुक् ॥ ८९ ॥
दद्रूर्दर्दूश्च, कोठके मण्डलकं च मण्डलम् ।
हृल्लासे हिक्का हेक्कापि, पीनसे स्यादपीनसः ॥ ९० ॥
आपीनसः प्रतिश्यायः प्रतिश्या, श्वयथौ पुनः ।
शोफ-शोथौ, छर्दने तु च्छर्दिश्छर्दी प्रच्छर्दिका ॥९१॥
वमनं वमि-वमथू, कुरण्डस्त्वण्डवर्धने ।
कूरण्डोऽपि, प्रमेहे तु मेहोऽपि च, चिकित्सके ॥ ९२ ॥
आयुर्वेद्यायुर्वेदिको भिषग्-भिषज-भिण्जाः ।
जायौ भेषज-भैषज्ये उपचारश्चिकित्सने ॥ ९३ ॥
उपचर्यापि, सत्कृत्यालंकृतस्वकनीदये ।
कूकुदः कूपदश्चाऽऽपदापदे विपदा विपद् ॥ ९४ ॥
विपत्तौ, कृच्छ्रकच्छे तु समौ दूडाभ-दूडभौ ।

समर्धुकस्तु वरदे स्यात् समर्धक इत्यपि ॥ ९५ ॥
सदस्ये तु पारिषद्य-पार्षद्यावथ संसदि ।
परिषत्-पर्षदौ तुल्ये समज्या च समाजयुक् ॥ ९६ ॥
आस्थानमास्था, दैवज्ञे नैमित्तिको निमित्तवित् ।
नैमित्तोऽपि च, मौहूर्तो मौहूर्तिकेऽथ लेखके ॥ ९७ ॥
लिपिकरो लिविकरोऽक्षरन्यासे लिपिर्लिविः ।
मषी-मस्यौ मलिनाऽप्सु, कितवे त्रितयं स्मृतम् ॥९८॥
धार्तो धूर्तोऽक्षधूर्तश्च, दुरोदर-दरोदरे ।
द्यूतेऽथाऽक्षे पाशकः स्यात् प्रासकः शारितः फलम्॥९९॥
फलकोऽष्टापदे शारिः शारः खेलनिकोच्यते ।
व्यालग्राह्यहितुण्डिक आहितुण्डिक इत्यपि ॥ १०० ॥
मनोजवस्ताततुल्ये मनोजवसकोऽपि च ।
क्षेमंकरो रिष्टतात्यरिष्टताती तथाऽऽस्तिके ॥ १०१ ॥
श्राद्ध-श्रद्धालू च, सहे प्रभविष्णुः प्रभूष्णुयुक् ।
शक्त-शक्तावसामर्थ्यजीवके चानवास्थिते ॥ १०२ ॥
चत्वारोऽमी पराः कर्णात् टिरिटिरि-ष्टिरेष्टिरा ।
चुरुचुरु-श्चुरुचुरा, शिथिलः शिथिरः श्लथे ॥ १०३ ॥
स्थित ऊर्ध्वंदमश्चोर्ध्वो निर्विकारो वकारवान् ।
ऊर्ध्वंदमस्तद्भवे तु ऊर्ध्वाद् दमिक दामिकौ ॥१०४॥
ऊर्ध्वंदमिकोऽप्यध्वगे तु स्यादध्वन्योऽध्वनीनवत् ।
गन्तु-गान्तू पथिकश्च पान्थः, शम्बल-सम्बले ॥ १०५ ॥

१ वकाररहितस्तत्सहितश्च ऊर्ध्वः, ऊर्ध्वश्चेत्यर्थः ।

पाथेये, जङ्घाकरे तु जङ्घाकरिक जाङ्घिकौ।
त्वरिते जवी च जवनः सहायेऽभ्यनुतश्चरः ॥ १०६ ॥
अनुगाम्यनुगश्चापि सेवायां स्यादुपासना।
उपास्त्युपेता चोपास्या परेश्चैषणमेषणा ॥ १०७ ॥
पत्तौ पदाति-पादातौ पादातिक-पदातिकौ।
पदकः पदगः पद्गः पादाविक-पदाजिकौ ॥ १०८ ॥
प्रष्ठे सरोऽग्रेऽग्र-पुरः-परतो गम-गामि-गाः।
पुरस्तः, आवेशिके तु स्तः प्राघूर्णक-प्राघुणौ ॥१०९॥
अतिथ्योऽतिथिरातिथ्य आङ्परौ गान्तु-गन्तुकौ।
आवेशिक आतिथेय्यातिथेयातिथ्यानिःस्वनाः ॥११०॥
ग्रामे भवे तु ग्रामीण-ग्रामीणौ ग्राम्य इत्यपि।
ग्रामेयकश्च, लोके तु जनो जनपदस्तथा ॥ १११ ॥
देवलोके देवविशा देवविद् वाऽभिजातके।
जात्याभिजौ कुलीनश्च कुल्य-कौलेयकौ समौ ॥११२॥
महाकुलीनसहितौ माहाकुल-महाकुलौ।
गोत्रोऽन्वयोऽन्ववायश्च संतानः संततिस्तथा ॥ ११३ ॥
स्त्रियां महेला महिला मेहला च महेलिका।
वामिर्वामा जोषा योषा स्याद् योषिदपि योषिता॥११४॥
स्याद् मत्तकासिनी मत्तगामिन्यां मत्तकाशिनी।
स्त्र्यलङ्कारे कुट्टमितं ह्युकारं, कन्यका कनी ॥११५॥
कुमार्यां, मध्यमवयःस्त्रियां स्यात् तरुणी तथा।
तलुनी, युवतिश्चोक्ता युवत्याद्यवयःस्त्रियाम् ॥११६॥

सुवासिनी स्ववासिनी वधूटी वध्वटीति च ।
चिरिण्टी स्याच्चिरण्टी च चरिण्टी सचरण्टिका ॥११७॥
पत्न्यां सधर्मिणी सहधर्मिणीगृहिणीगृहाः ।
कलत्रं कडत्रं दारः पुंसि वा भूम्नि दारया ॥ ११८ ॥
जनिर्जनी कुटुम्बिन्यां स्यात् पुरन्ध्रिः पुरन्ध्र्यपि ।
स्नुषायां तु वधूयुक्ता वधूटी च जनिर्जनी ॥ ११९ ॥
कुलस्त्रियां तु कुलतो वालिका पालिकाऽपि च ।
कान्तायां प्रेयसी प्रेष्ठा षटकार-ठकारभाक् ॥ १२० ॥
प्रिया, कान्ते प्रियः प्रेयान् प्रेष्ठष्ट-ठद्वयान्वितः ।
वरो वरयितोद्वाहे विवाहे यम-यामकौ ॥ १२१ ॥
उपात्, जायापत्योस्तु जम्पती दम्पती स्मृतौ ।
द्वित्वे, जस्यती दस्यती प्रायो वेदे प्रयोजितौ ॥ १२२ ॥
जित्वरीवाचकौ पूर्वविकल्पादावुदाहृतौ ।
हरणे तु सुदायः स्याद् दायो युतक-यौतकौ ॥ १२३ ॥
यौतुकः, परगेहस्था स्वायत्ता शिल्पजीविनी ।
सैरन्ध्री चापि सेरन्ध्र्यथावरोधनप्रेष्यिका ॥ १२४ ॥
असिक्निका स्यादसिक्नी, दूत्यां दूतिरपि स्मृता ।
प्राज्ञी प्रज्ञा प्रजानत्यामाचार्यानी नृयोगके ॥ १२५ ॥
आचार्या, मातुलानी च मातुल्यपि तथा मता ।
उपाध्यायान्युपाध्यायी, क्षत्रियाणी स्वतो भवेत् ॥१२६॥

---

१ दारः पुल्लिङ्गः, बहुवचनान्त., एकवचनान्तश्चेत्यर्थः । २ धवयोग विनेत्यर्थः ।

क्षत्रिया स्यादुपाध्याय्युपाध्यायाऽऽर्याणिका पुनः ।
आर्या पुनर्भ्वा दिधिषूर्दिधीषुरपि तद्भवे ॥ १२७ ॥
दिधिषुर्दिधिपूर्विप्रे लग्नतो दिधिषुर्मतः ।
दिधिषूरप्यसत्यां तु वर्षणी धर्षणीति च ॥ १२८ ॥
पांशुला पांसुलाऽथ स्यात् पतिः पत्नी च जीवतः ।
पतिवत्न्यां, निर्वीरा च वीरा पति-सुतोज्झिता ॥१२९॥
भिक्षुकी भिक्षुणी मुण्डा श्रमणा श्रवणाऽपि च ।
गणिकायां वेश्या वेष्या पण्याङ्गना पणाङ्गना ॥१३०॥
कुट्टन्यां शम्भली दन्त्य-तालव्यादिर्मता बुधैः ।
कुम्भदास्यां पोटा वोटाऽवस्त्रनार्यां तु नग्निका ॥१३१॥
नग्ना कोटवी कोट्टवी, ऋतुमत्यां तु पुष्पिता ।
पुष्पवती चाविरवी निष्पुष्पायां तु निष्कला ॥१३२॥
निष्कल्यपि च स्त्रीधर्मे आर्तवं ऋतुसंयुतम् ।
रजः सान्तं रजोऽदन्तो ना गुणेऽप्यथ मैथुने ॥१३३॥
सुरतं स्याद् रति-रते पशोर्धर्म-क्रिये स्मृते ।
जभनं यभनं, गर्भवत्यां गुर्वी च गुर्विणी ॥ १३४ ॥
प्रसूतायां विजाताख्या प्रजाताप्यथ भ्रूणके ।
वृधसानो वर्धसानो गरभो गर्भ इत्यपि ॥ १३५ ॥
दोहदं दौहृदं श्रद्धा, पुत्र्यां तु स्यात् स्तनन्धयी ।
स्तनन्धया सूनुः सुतापत्ये, पुत्रेऽपि तोककम् ॥१३६॥
तुगपत्ये, भ्रातृपुत्रे भ्रातृव्यो भ्रात्रीयोऽपि च ।
पुत्रपुत्रे पौत्रस्तस्य युवापत्ये पुनः स्मृतः ॥ १३७ ॥

पौत्रायण एवं पुनर्भूर्नानान्द्रो दुहितृवत् ।
पौनर्भव-पौनर्भवायणौ, नानान्द्र इत्यपि ॥ १३८ ॥
नानान्द्रायणो, दौहित्रो दोहित्रायणकस्तथा ।
पैत्र्यां नप्ता भवेद् नप्त्री स्यात् पितृष्वसुरात्मजे ॥१३९॥
पितृष्वसेयवत्पैतृष्वस्रीयो, जननीस्वसुः ।
पुत्रे तु मातृष्वस्रीयस्तद्वन्मातृष्वसेयकः ॥ ॥१४० ॥
दास्याः सुते तु दासेय-दासेरौ च, नटीसुते ।
नाटेय-नाटेरौ, पुत्रे बन्धक्या बान्धकेयवत् ॥ १४१ ॥
बान्धकिनेयश्च, कौलटेरः स्यात् कौलटेयवत् ।
भिक्षुसत्याः सुते कौलटेय-कौलटिनेयकौ ॥ १४२ ॥
स्वजाते त्वौरसौरस्यौ, भवेद् गोलश्च गोलकः ।
मृते पत्यौ जारजोऽथ भ्रातरि स्यात्सहोदरः ॥ १४३ ॥
समानोदर्य-सोदर्य-सोदराः, ज्येष्ठभ्रातरि ।
अग्रजोऽग्रियाऽग्रिमकौ स्यात् कनीयांश्च कन्यसः ॥१४४॥
यविष्ठोऽपि यवीयांश्च कनिष्ठे सोदरे समाः ।
ज्येष्ठ-कनिष्ठ-यविष्ठास्त्रिकवर्गेद्वितीयकाः ॥ १४५ ॥
स्यालस्तालव्य-दन्त्यादिः पत्न्या भ्रातरि कथ्यते ।
देवृ-देवर-देवानः स्युः पत्युरनुजे, स्वसा ॥ १४६ ॥
जानिर्यानिः कुलस्त्री च भग्नी स्याद् भगिन्यन्विता ।
पत्युः स्वसरि ननन्दा ननान्दा नन्दनीत्यपि ॥१४७॥
पत्नीकनिष्ठभगिन्यां श्याली शाली च, खेलने ।
परिहासः परीहासः कुर्दनं कूर्दनं समौ ॥ १४८ ॥

किलः केलिश्च जनके बप्पो वप्रश्च तातयुक् ।
ततो जनयिता तद्वज्जनित्रोऽपि च, मातरि ॥१४९॥
अम्बाऽप्यब्बा जनयित्री जनित्री जननीयुता ।
जानी, पित्रोः स्मृतौ माता-पितरौ, मातरात्परौ ॥१५०॥
पितरः पितृशब्दश्च, ज्ञातौ स्वः स्वजनस्तथा ।
बान्धवो बन्धुरात्मीये स्व-स्वकीये, नपुंसके ॥ १५१ ॥
पण्डु-पाण्डौ शण्ठ-शण्ढौ तृतीयाप्रकृतिस्तथा ।
तृतीयप्रकृतिर्देहे कलेवरं कडेवरम् ॥ १५२ ॥
तनूः स्यात्तनु-तनुषी घनस्तद्वच्च भूघनः ।
गात्रं गान्त्रं मूर्तिमच्च मूर्तिः स्यात, कुणपे शवः॥१५३॥
शवः सान्तं भवेत् षण्ढे, मूर्ध्नि मस्तक-मस्तिके ।
शिरः सान्तं स्मृतं क्लीबे शिरोऽदन्तो मतो नरि ॥१५४॥
चिकुरश्चिहुरः केशे ललाटस्याऽलके पुनः ।
भ्रमरकः स्याद् भ्रमरालको वेणिः प्रवेणियुक् ॥ १५५ ॥
केशन्यासे काकपक्षे शिखण्डक-शिखाण्डिकौ ।
वक्षस्त्रिषु च्छन्दस्यपि, दान्ते षण्ढे भषद् भसद्॥१५६॥
आमाशयस्थाने च, जघनेऽपि तुण्डि-तुण्डकौ ।
घनं घनोत्तमं भाले त्वलीकमलिकं तथा ॥ १५७ ॥
कर्णे श्रवणं श्रुतिवत् श्रवः श्रोत्रं च श्रौत्रकम् ।
नेत्रेऽक्ष्यऽक्ष्णं दृशि-दृशौ दृग् लोचन-विलोचने ॥१५८॥
कनीनिकायां तारा स्यात् तारकाऽप्यर्धवीक्षणे ।
काक्षः कटाक्षो नेत्रस्य मीले मेष-मिषौ नितः ॥१५९॥

कालभेदेऽपि भ्रूविकारे भ्र-भ्रु-भ्रू-भृतः कुटिः ।
भ्रूमध्ये कूर्च-कूपे कूर्पं नक्रे नस्नया नसा ॥ १६० ॥
नासा नस्या नासिका च नाशिका घ्राणमाघ्रया ।
घ्रा, दन्तवस्त्रे ओष्ठः स्यात् त्रिकवर्गद्वितीयवान् ॥१६१॥
ओष्ठप्रान्ते सृक्क नान्तं क्लीबं सृक्कमदन्तकम् ।
सृक्कणी सृक्कणिर्ङ्यन्तेऽदन्ते सृक्कि नपुंसके ॥ १६२ ॥
इदन्तमेकैर्वद्वन्द्वं कयुग्ममपरैः स्मृतम् ।
सृक्कशब्देऽथ हन्वग्रसन्धौ स्याच्चिबुकं चिबुः ॥१६३॥
दंष्ट्रिकायां दाढिका स्याद् द्राढिका खादने पुनः ।
रदनो रदयुग्दंश-दशनौ मल्ल-मल्लकौ ॥ १६४ ॥
जिह्वायां रसना दन्त्य-तालव्यान्तर्गता रसा ।
रसमातृका रसा च रसिका रसनं तथा ॥ १६५ ॥
गले कण्ठः कण्ठी कण्ठं शब्द-समीपयोरपि ।
अंसे तु स्कन्धः स्कधश्च सान्तं क्लीबमुरोंसयोः ॥१६६॥
सन्धौ तु जत्रु षण्ढे स्यात् तकार-रेफयोगवत् ।
प्रवेष्टो दोर्दोषा बाहुर्बाहा बाहो भुजो भुजा ॥ १६७ ॥
भुजामध्ये कपोणिः स्यात् कफोणी च कफोणियुक् ।
कफणिः कफणी तद्वत्कुर्परः कूर्परोऽपि च ॥ १६८ ॥
प्रकोष्ठे वर्गद्वितीयः स्यात् कलाचिः कलाचिका ।
हस्ते करः करिहस्तमूले तु मणिबन्धवत् ॥ १६९ ॥
मणिः स्यात्करशाखायामङ्गुरी चाङ्गुरिस्तथा ।
अङ्गुलोऽङ्गुलिरङ्गुल्यां तर्जन्यां तु प्रदेशिनी ॥ १७० ॥

प्रदेशिनी प्रदेशिका, ज्येष्ठाङ्गुल्यां तु मध्यमा ।
मध्या, ज्येष्ठा-कनिष्ठे द्वे टवर्गद्वितीयान्विते ॥ १७१ ॥
पुनर्नव-पुनर्भवौ करजे नखरस्त्रिषु ।
नखोऽस्त्री तर्जन्यायत्तेऽङ्गुष्ठे त्वथ प्रदेशवत् ॥ १७२ ॥
प्रादेशोऽप्यायताङ्गुलौ हस्ते स्यात् प्रतलस्तलः ।
तालिका-तालौ चपेटश्चर्पटश्चपटोऽपि च ॥ १७३ ॥
तद्द्वये योजिते सिंहतलः संहतलस्तथा ।
तताङ्गुष्ठमध्याङ्गुलिमाने तालस्तलोऽपि च ॥ १७४ ॥
वितस्ति-खड्गमुष्टयोश्च, कुञ्जिताङ्गुलिके करे ।
प्रसृतः प्रसृतिश्चापि गण्डूषे चलुकश्चलुः ॥ १७५ ॥
चुलुको, निष्कनिष्ठे स्याद् हस्त आर्तिररत्नियुक् ।
तिर्यक्प्रसारितबाह्वोर्व्यायामो व्याम-व्यामनी ॥१७६॥
वियामः, पृष्ठवंशे तु रीढको रीढयुग् मतः ।
पृष्ठं वर्गद्वितीयासमुत्सङ्गेऽङ्को नपुंसके ॥ १७७ ॥
सान्तमङ्कोऽप्यदन्तो नाऽथोरोजोरसिजौ स्तने ।
कुच-कूचौ, जठरे तु स्यात पिचण्डः पिचिण्डयुक्॥१७८॥
तुन्दं तुन्दिः कुक्ष-कुक्षी, यक्नि कालेय-कालके ।
कालखण्डं कालखञ्जं, गुल्मे प्लीहा प्लिहा तथा ॥१७९॥
नान्तौ, प्लीहा चाबन्तोऽपि, मध्ये मध्यम इत्यपि ।
विलग्नावलग्नौ सर्वे पुंक्लीबाः, रसनापदे ॥ १८० ॥
कटीरं च कटि-कटी-कटाः श्रोणी च श्रोणियुक् ।
वलित्रयसमाहारे त्रिवलिस्त्रिवली तथा ॥ १८१ ॥

त्रिकपार्श्वगर्तयोस्तु कुकुन्दरे कुकुन्दुरे ।
युतौ स्फिचौ स्फिजौ चान्तौ जान्तौ, स्यात्स्मरमन्दिरे।१८२।
योनिर्योनी च, पुंश्चिह्ने शेपः शेफश्च सान्तगे ।
शेप-शेफौ च शेवश्च त्रयोऽदन्ता बुधैः स्मृताः ॥१८३॥
लाङ्गूलं शङ्कु लङ्गूलं, मुष्क आण्डाण्डकौ नरि ।
अण्डं पेलं पेलकोऽप्यथोरुरूरूश्च सक्थनि ॥ १८४ ॥
जङ्घायां तु टङ्क-टङ्गौ खनित्रेऽपि च तौ मतौ ।
पादग्रन्थौ कुल्फ-गुल्फौ घुटिको घुण्ट-घुण्टकौ ॥१८५॥
घुटः सर्वेऽपि पुंस्त्रीगाः, चरणे चलनः क्रमः ।
क्रमणः पाद-पदौ पात् पत्-पदे अंह्रिरङ्घ्रियुक्॥१८६॥
तिलके कालकस्तद्वत् तिलकालक इत्यपि ।
जडुलो जटुलो, मांसे पलं पललमामिषम् ॥१८७॥
अमिषं चार्द्रमांसे तु भवेदर्पशमार्पिशम् ।
मुख्यमांसे बुक्का नान्तं त्रिषु वुक्कस्त्रिषु स्मृतः ॥१८८॥
वुक्काग्रमांसाग्रमांसे वृक्कः स्यात्पुंस्त्रियोर्वसा ।
मेदः सान्तं मेदोऽदन्तो मस्तिष्को मस्तुलुङ्गकः ॥१८९॥
मस्तकस्नेहे गोदोऽस्त्री करोटं शिरसोऽस्थनि ।
करोटीवत् करोटिश्च भकालं च भगालयुक् ॥१९०॥
पृष्ठहड्डे कशेरुका कशारुकाऽस्थिसंभवे ।
मज्जा नन्तो द्वयोर्मज्जाऽऽबन्तः स्त्री रेत्र-रेतसी ॥१९१॥
बल-बल्ये च वीर्ये द्वे लोम रोम तनूरुहे ।
तनुरुहं, चर्म चर्म त्वक् त्वचं चोचमित्यपि ॥१९२॥

असृग्धरा सृग्धरा च कषिते लेख्यचर्मणि ।
कडित्रं सकटित्रं च, स्नायौ वसस्नया स्नसा ॥१९३ ॥
स्नावा नान्तो, धमन्यां तु धर्मानिर्नाडि-नाडकौ ।
नाडी शिरा सिरा नेत्रमले दूषी सदूषिका ॥ १९४ ॥
दूषीका काणुकं काणूकमाणूकवदाणुकम् ।
घ्राणमले शिङ्घाणक-सिङ्घाणौ, लालिका पुनः ॥१९५॥
सृणीका सृणिका गूथो विड्-विषौ शान्त-षान्तगौ ।
वर्चस्क-वर्चसी तुल्ये विष्ठा वर्गद्वितीयभाक् ॥१९६॥
नेपथ्ये वेष-वेशौ द्वावुत्सादनमुद्वर्तने ।
उच्छादनं चापि समालभने चर्चिक्यं मतम् ॥१९७॥
चर्चाऽपि, मण्डने प्रति-परितः कर्म कथ्यते ॥
मार्ष्टो मार्जो मृजा मार्जा मार्जना, स्नान आप्लवः॥१९८॥
आप्लावोऽपि च, गात्रानुलेपन्यां वर्तिरुच्यते ।
वर्ती तथा जोङ्गके स्यादगर्वगुरु वंशकम् ॥ १९९ ॥
वंशिका वंशिकं कृमिजग्धं कृमिजमित्यपि ।
प्रवरं प्रकरं तुल्ये गोशीर्षे हरिचन्दनम् ॥ २०० ॥
हरिश्च, रक्तचन्दने पत्रगं च पतङ्गकम् ।
पत्राङ्गं, सौमनसे तु जातिर्जाती फलं तथा ॥ २०१ ॥
जातीफलं जातिफलं तद्वत्कोशफलं मतम् ।
जातीकोशं जातीकोषं, कर्पूरे स्यात् सिताभ्रकः॥२०२॥
सिताभश्चापि, कस्तूर्यां नाभिवद् मृगनाभिजा ।
मृगनाभिर्मृगमदो मृगः स्याद् मद इत्यपि ॥ २०३ ॥

कुङ्कुमे वरवाह्लीकं वरं वाह्लीक-वाह्लिके ।
कश्मीरजन्म काश्मीरं कश्मीरजमपि स्मृतम् ॥ २०४ ॥
संकोचपिशुनं तद्वत्संकोचं पिशुनं समे ।
वर्णं वर्ण्यं, देवसुमे लवङ्गं लवसंयुतम् ॥ २०५ ॥
कोशफले कक्कोलकं कक्कोलं कोलकं तथा ।
कोलं कोरं च, कालानुसार्ये यापक-जापके ॥ २०६ ॥
कालीयकं कालेयकं कालियं चाऽग्निवल्लभे ।
रालोऽक्ष्यरालः, श्रीवासे धूपः स्याद् वृक-वृक्षतः॥२०७॥
श्रीवेष्टः श्रीपिष्टकश्च, कोटीरे मुकुटोऽस्त्रियाम् ।
मकुटोऽपि किरीटं स्यात् तिरीटं पुष्पदाम तु ॥२०८॥
नान्तः क्लीबेऽराबन्तोऽस्मिन् मुण्डमालाभिधे स्मृतम् ।
ललामवल्ललामाऽश्व-प्रधान-ध्वज-लक्ष्मसु ॥ २०९ ॥
पुण्ड्र-वालधि-शृङ्गेषु भूषा-प्रभावयोरपि ।
माल्यं माला, तिलके तमालपत्रं तमालवत् ॥ २१० ॥
शीर्षस्रज्यवतंसः स्याद् वसन्तोत्तंसकौ समौ ।
त्रयोऽमी कर्णपूरेऽपि पत्रावल्यां तु पत्रतः[1] ॥ २११ ॥
भङ्गि-लेखा-लताङ्गुल्यो वल्लरी मञ्जरीति च ।
वल्लिश्चोत्क्षिप्तकायां तु कर्णान्दूश्च कर्णान्दुयुक् ॥२१२॥
कण्ठभूषायां ग्रैवेयं ग्रैवं ग्रैवेयकं तथा ।
मुक्तास्रज्याहारो हारः स्त्रीनॊर्यष्ट्यां सरिः सरः॥ २१३ ॥
सारिकाऽप्येकावल्यां तु कण्ठी कण्ठिकया सह ।

१ पत्रभङ्गि, पत्रलेखा, पत्रलता, पत्राङ्गुलिश्चेत्यर्थः ।

कटिके तु पारिहार्यःपरिहार्यश्च कङ्कणम् ॥ २१४ ॥
कङ्कणिश्चोर्मिकायां त्वङ्गुलीयकाङ्गुरीयके ।
मेखलायां सारसनं दन्त्य-तालव्यमध्यगा ॥ २१५ ॥
रसना, काञ्चिः काञ्ची च किङ्किणिः क्षुद्रघण्टिका ।
किङ्कणी कङ्कणीका च कङ्कणी किङ्किणीत्यपि ॥२१६॥
समे मञ्जीर-मन्दारे नूपुरे पादतः परे ।
शीली च नालिका पादाङ्गुलीये पादतः परे ॥२१७॥
पालिका कीलिका, वस्त्रे वसनं वस्त्र-वाससी ।
सिनो निवसनं सत्रं कर्पटं पटमित्यपि ॥ २१८ ॥
पटः पट्याच्छादनं च छादः सिक्-सिचयौ तथा ।
वस्त्राञ्चले वर्ति-वस्ती दुकूलमतसीपटे ॥ २१९ ॥
दुगूलं, कम्बले रल्लो रल्लकोऽथ निवीतके ।
प्रावृतं निवृतं, स्थूलशाटे तालव्य-दन्त्यवान् ॥२२०॥
वरासिः, परिधानस्य ग्रन्थौ नीवी च नीवियुक् ।
चण्डातके चलनकश्चलनश्चलनिका पुनः ॥ २२१ ॥
चोलश्चोली कञ्चुलिका कञ्चूलः कञ्चुकोऽपि च ।
कूर्पासकश्च कूर्पासः कुर्पासः सकुर्पासकः ॥ २२२ ॥
शाटके तु शाटः शाटी, परिधानापराञ्चले ।
कच्छा कच्छाटी च कच्छाटिका, कौपीनके पुनः॥२२३॥
कक्षापटः कक्षापुटः, कर्पटे नक्तको मतः ।
लक्तकः, प्रच्छदपटे उत्तरच्छद उच्यते ॥ २२४ ॥
निचोलको निचुलको निचोलं च निचोल्यपि ।

निचुलोऽवसत्थिकायां स्मृता पर्यस्तिकायुता ॥२२५॥
पर्यस्तिश्चापि पर्यङ्कः पल्यङ्कोऽपि, कुथे पुनः ।
वर्णपरिस्तोम-वर्णौ परिस्तोमवदास्तरः ॥ २२६ ॥
आस्तरणं प्रवेणीयुक् प्रवेणिः प्रतिसीरिका ।
जवनी जवनिकापि यवनी यमनीति च ॥ २२७ ॥
दूष्ये स्थूलं स्थुडमपि, पटकुट्यां तु केणिका ।
केणिः, पल्लवादिकृता शय्या संस्तर-प्रस्तरौ ॥ २२८ ॥
स्रस्तरोऽपि च, तल्पे तु शयनं शयनीयवत् ।
शय्यापि च खट्वायां तु मञ्चवद् मञ्चकः स्मृतः ॥२२९॥
पर्यङ्कोऽपि च पल्यङ्कः, पतद्ग्राह-पतद्ग्रहौ ।
प्रतिग्रह-प्रतिग्राहौ पालेऽथो दर्पणे मतः ॥ २३० ॥
मकुरो मुकुरस्तद्वद् मङ्कुरोऽप्यात्मदर्शवत् ।
आदर्शो, वस्त्रासने त्वासन्दा-सन्द्यौ च सन्दवत् ॥२३१॥
सन्दी भोजन आच्छादे एकोक्त्या चोभयोरपि ।
कशिपुर्दन्त्य-तालव्यमध्यः स्याच्छयनासने ॥ २३२ ॥
एकोक्त्योशीरमौशीरं पलङ्कशा पलङ्कषा ।
राक्षा रक्षा च लाक्षापि तद्रसे याववद्यतः ॥ २३३ ॥
यावको लक्तकालक्तौ, दीपस्तु कज्जलध्वजे ।
प्रदीपो दीपवृक्षश्च तालवृन्ते तु वीजनम् ॥ २३४ ॥
व्यजनं मृगचर्मोते धवित्रं च धुवित्रवत् ।
केशमार्जे कङ्कतिका कङ्कतः काक-कङ्कते ॥ २३५ ॥
कङ्कती; बालक्रीडने गिरिको गिरिवद्गुडः ।

